श्रीः.

# NITYA GRANDHA

BY

**BHAGAVAD RAMANUJA**



WITH

# ANHIKA - KARIKA

BY

**SRI VANGI VAMSESWARA**

(*The immediate disciple of Sri Bhagavad Ramanuja*)



EDITED BY

**PANDIT V. ANANTACHARYA,**

(*Retired Lecturer in Sanskrit,*
*Pachaiyappa's College, Madras.*)



Published by
V. PERUMALL CHETTY & SONS,
Georgetown, Madras.
**1941.**



Copies can be had

of

V. PERUMALL CHETTY & SONS,

5, Stringer's Street, G. T., Madras

or

V. ANANTACHARYA

Krishnapuram,

Kodambakam Post,

Madras.



श्रीः

श्री भगवद्रामानुज विरचितः

# ॥ नित्य ग्रन्थः ॥

तदव्यवहित शिष्यैः

श्री वाङ्गि वंशेश्वर महा देशिकैः विरचिताः

# ॥ आह्निक कारिकाश्च ॥

424



पुस्तक मिदं,

पण्डित. वे. अनन्ताचार्येण

सम्यक् परिशोध्य मुद्रापितम्.



मद्रास् वि. पेरुमाळ् चेट्टि अण्ड् सन्स् शालाध्यक्षैः

स्वकीये एव मुद्रालये संमुद्र्य

प्रकाशितम्.

१९४१.



कपर्दि मत कर्दमं कपिल कल्पना वागुरां ।
दुरत्यय मतीत्य तत् द्रुहिण तन्त्र यन्त्रोदरम् ॥

कुदृष्टि कुहना मुखे निपततः परब्रह्मणः ।
करग्रह विचक्षणो जयति लक्ष्मणोयं मुनिः ॥

श्रीमते रामानुजाय नमः.

## अ व त र णि का.

---

इह खलु जगति जनिमन्तः सर्वेपि श्रेयः संपाद यितुम् ईहन्ते । श्रेयस्साधनं च धर्म एवेति "धर्मो विश्वस्य जगतः प्रतिष्ठा" इत्यादिभिः श्रुतिवाक्यैः साधितम्, तत्रापि आचारः प्रथमो धर्मः इति महर्षिभिः निर्णीतम्. स्वधर्मस्य सर्वतः श्रेयस्त्वं भगवान् गीताचार्यः निश्चकर्ष. जगत्यस्मिन् परस्पर विलक्षणाः बहवः समयाचाराः परिदृश्यन्ते. तेषु स्वाधिकारानुगुणः सारांशः परिग्रहीतव्यः.

सारासार विवेकस्तावत् विद्वाद्भिरपि दुस्साधः । श्रुतयः दुर्विज्ञेयार्थाः । उपबृंहणान्यपि भिन्नाभिन्नार्थानि । तस्मात् सुसूक्ष्मस्य धर्ममार्गस्य परिज्ञाने महात्मभिः प्रहतः पन्था एव प्रमाणम्. धर्मश्चायं नित्य नैमित्तिक काम्या दिभिः प्रकारैः प्रपञ्चितः, काला ष्टक कालपञ्चकादिभिः विभागैः विभक्तः, देशकाल कुलादिभिः उपाधिभिः उपस्कृतः, ब्रह्म, क्षत्र, वैश्यादिभिः वर्ण भेदैः विशेषितः, ब्रह्मचर्य गार्हस्थ्यादिभिः आश्रमैः आयामितः, अग्नीन्द्रा दिभिः उपास्य भेदैः विस्तृतश्च दृश्यते । एवं परश्शतैः प्रकारभेदैः दुरवबोधे धर्मसूक्ष्मे "भूयसां स्यात् बलीयस्त्वमिति" न्यायेन, यत्र भूयसां शास्त्राणां संवादः, यत्र भूयसां न्यायानाम् ऐककण्ठ्यं, यत्र भूयसां विदुषां ऐकमत्यं, तवेद

बलीयसीं कोटिमाटीकते. एवं महता प्रयासेन निर्णीतानां वित्तशाठ्यादि वर्जित मनुष्ठितानाञ्च धर्माणां भगवदर्चनारूपत्वं गीतोपनिषदि मुक्तकण्ठ मुद्घोषितं द्रष्टव्यम्. तत्र प्रत्यहमनुष्ठेयेषु अहोरात्र कृत्येषु भगवदाराधनमेव प्रधानतमम् सर्वोत्तमं च भवति.

सन्ध्योपासनादीना मितरेषामपि कर्मणां भगवदर्चना रूपत्वेनाकारेण प्राशस्त्ये प्रतिपादिते, साक्षात् भगवदाराधनस्य प्राशस्त्याव बोधने कैमुतिक न्यायः जागर्त्येव.

तदेवंविधस्य भगवदाराधनस्य अनुष्ठानप्रक्रिया व्यास शौनक बोधाय नादिभिः महर्षिभिः प्रणीतेषु धर्मशास्त्रेषु बहुषु बहुविधा प्रपञ्चिता दृश्यते· तथापि भगवच्छास्त्रमिति प्रसिद्धे श्रीपाञ्चरात्रे प्रतिपादितः प्रकार एव शुद्ध याजिना मनन्य देवता भक्तानां परमैकान्तिनां शुद्धान्त सिद्धान्तिनाम् सर्वात्मनानुगुणतया परिग्रहीतव्यः इति भगवद्भाष्यकाराणामाशयः.

भगवन्तः रामानुजाचार्याः आनुकूल्य संकल्पादि परिकर पञ्चक परिपूर्णायाः शरणागतेरनुष्ठान प्रकारम् गद्यत्रय निर्माणमुखेन प्रदर्श्य, तदुक्तप्रकारेणानुष्ठित प्रपत्याख्य मोक्षोपाय मधिकारिणम् त्रैगुण्य विषय वेदोक्त धर्मानुष्ठान निष्ठेभ्यः पृथक्कृत्य, भगवत्कैङ्कर्यैकरतिं तं परमैकान्ति शब्देन व्यपादिश्य, तदधिकारानुगुणं भगवदाराधन प्रयोगम् अनेन नित्य ग्रन्थेन उपादिदिशुः.

सोयं प्रयोगः ऋगादिवत् बहुविध शाखाभेद भिदुरे अतिवितते श्रीपाञ्चरात्रे किञ्चित् सिद्धान्तस्थां काञ्चित् संहितां प्रधानीकृत्य ततः समुद्धृतः इति मन्तव्यम्. सर्वेषामपि भूतानां भगवत्कञ्चुकत्वेन भगवत्स्व रूपान्तर्भावात् भगवत्याराधिते सर्वाणि भूतानि आराधितानि भवन्ति इत्यत्र न कस्यापि विवादः.

भगवच्छास्त्रादुद्धृतेय माराधन प्रक्रिया वैदिक मतावलम्बिभिः सर्वैरपि परिग्राह्या इत्यवश्याभ्युपेयम्. यतः विशिष्टाद्वैतेतर सिद्धान्त तीर्थ करा अप्याचार्याः, तत्व विषये विसंवादे सत्यपि अभिगमनादि कालपञ्चक विभागेन भगवद्धर्मानुष्ठाने न विवदन्ते. सोयं प्रयोगः भगवद्भाष्यकारै रतिसंक्षेपेण प्रदर्शितः. अथच तदव्यवहिताशिष्यैः वङ्गिवंशेश्वरैः अपेक्षितां शेषु विस्तर प्रदानेन परिष्कृतः. सोयं ग्रन्थः बहोः कालात् पूर्वम् आन्ध्र लिप्याम् संमुद्रितः. सोऽपीदानीं न सुलभः. श्रीवङ्गि वंशेश्वर विरचितो ग्रन्थ एव आह्निक कारिका इति इदानीं व्यपदिश्यते. नैता वत्पर्यन्तमस्य ग्रन्थस्य समीचिनं मुद्रणं जातम्. यदाहं अतीते संवत्सरे तीर्थयात्रा प्रसङ्गेन काशी प्रयागायोध्यादि दिव्याभिव्य क्ति स्थलेषु गत्वा, तत्रत्यैः पण्डितैस्सह समागम संभाषणादि सुखमन्वभूवम्, तत्र बहुभिः पण्डितैः, परमास्तिकैः विशेषतो विशिष्टाद्वैत सिद्धान्त बद्धादरैः श्रीवैष्णव नित्यानुष्ठानप्रक्रिया प्रतिपादकाना मेतादृशानां ग्रन्थानां संमुद्रय प्रकाशनम् तेषामुत्तरदेशेषु प्रचारकरणञ्च अवश्य कर्तव्येषु प्रधानतम मिति अवबोधितो भवम्.

कार्यस्यास्य द्रव्यसा ध्यत्वेन अकिञ्चनोहं किं कुर्यामिति खिन्नमानसः तेषु तेषु प्रभुवर्येषु विषयमिमं प्रस्तुवन् "एति जीवन्त मानन्द" इति वैदेहीवदनारविन्द निर्गळितां गाथामेव प्रमाणी कुर्वन् काञ्चन कालकला मत्यवाहयम्. तदानीम् मद्रास् नगरे सुप्रसिद्धाः परम श्रीवैष्णवाः वि. पेरुमाळ् श्रेष्ठी अण्ड् सन्स् कार्यालया धिकारिणः विषय मिमं श्रुत्वा, सद्य एव श्रीभगव द्रामानुज मानसोल्लासकरम्, सर्वलोक हितरूप मिदं मुद्रण कार्यम् आत्मीये न धनव्ययेनैव परिपूरयितुम् अङ्गीक्रार्षुः। परमोदार हृदयानां तेषामेवात्मीये मुद्रणालये संमुद्रित मिदं पुस्तकं बहिरवतारित मस्ति. कार्यस्यास्य निर्वहणे निरूपाधिककरुणा वरुणालयान्तरङ्गस्य भगवतः पुरुषोत्तमस्य संकल्पः श्री भगवद्र मानुजस्य दिव्या करुणा, इत्युभय मेव प्रधानं निमित्तम्. मदीयः प्रयत्नस्तु अकिञ्चित्करः इति निश्चप्रचम्. अनेन ग्रन्थ मुद्रापण कैंकर्येण श्रीरामानुजमुनिः प्रसीदतु.

कृष्णापुरम्,
कोडम्बाकम् पोस्ट्,
मद्रास्.
20-10-1941.

इति विदुषामनुचरः
एतद्ग्रन्थ मुद्रापणाधि कृतः,
वे. अनन्ताचार्यः.

श्री भगवद्रामानुज विरचित नित्यग्रन्थस्य

## ॥ विषयानुक्रमणी ॥

---

श्री वङ्कि वंशेश्वर विरचितासु

## ॥ आह्निक कारिकासु विषयाः ॥

श्री भगवद्रामानुज विरचितो

नित्यग्रन्थः ॥

अथ परमैकान्तिनो भगवदाराधन प्रयोगं वक्ष्ये ।

भगवत्कैङ्कर्यैकरतिः परमैकान्ती भूत्वा, भगवानेव स्वशेष भूतेन मया स्वकीयैश्च देहेन्द्रियान्तः करणैः स्वकीयैरेव कल्याणतमैः औपचारिक सांस्पर्शिका भ्यवहारिकैः भोगैः अखिल परिजन परिच्छदान्वितं स्वात्मानं प्रीतं कारयितुम् उपक्रमते" इत्यनुसन्धाय, तीर्थं गत्वा, शुचौ देशे, पादौ प्रक्षाल्य, आचम्य, तीरं संशोध्य, शुचौ देशे मूलमन्त्रेण मृदमादाय, द्विधा कृत्वा, शोधित तीरे निधाय, एकेन अधिकभागेन देहमलप्रक्षालनं कृत्वा, निमज्य आचम्य, प्राणायाम त्रयम् आसीनो भगवन्तं ध्यायन् कृत्वा, अन्यं मृद्भागमादाय, वामपाणितले त्रिधा कृत्वा, पृथक् पृथक् संप्रोक्ष्य, अभिमन्त्र्य, एकेन दिग्बन्धनम् अस्त्रमन्त्रेण कुर्यात् । अन्येन तीर्थस्य पीठम्, इतरेण गात्रलेपनं ।

ततः पाणी प्रक्षाल्य, उदकाञ्जलिमादाय, तीर्थस्य अर्घ्यार्थम् उत्क्षिप्य, भगवद्राम पादाङ्गुष्ठ विनिस्सृत गङ्गाजलं तीर्थे सङ्कल्पित पीठे आवाह्य, मूलमन्त्रेण अभिमन्त्र्य, उदकाञ्जलि मादाय, सप्तकृत्वः अभिमन्त्र्य, स्वमूर्ध्नि सिञ्चेत् । एवं त्रिः, पञ्चकृत्वः, सप्तकृत्वो वा । दक्षिणेन पाणिना जलमादाय अभिमन्त्र्य, पीत्वा, आचम्य, स्वात्मानं संप्रोक्ष्य, तीर्थे निमग्नः भगवत्

पादारविन्द विन्यस्त शिरस्कः यावच्छक्ति मूलमन्त्रं जपित्वा उत्तीर्य, शुक्लवस्त्रधरः धृतोत्तरीयश्च, आचम्य, ऊर्ध्वपुण्ड्रान् तत्तन्मन्त्रेण धारयित्वा, भगवन्तमनुस्मृत्य, तत्तन्मन्त्रेण भगवत्पर्यन्ताभिधायिना मूलमन्त्रेण जलं पीत्वा, आचम्य, प्रोक्ष्य, परिषिच्य, उदकाञ्जलि मादाय, भगवत्पादारविन्दयोः निक्षिप्य, प्राणानायम्य, भगवन्तं ध्यात्वा, अष्टोत्तरशतं मूलमन्त्रम् आवर्त्य, परिक्रम्य, नमस्कृत्य, आधारशक्त्यादि पृथिव्यन्तं तर्पयित्वा, श्रीवैकुण्ठादि पार्षदान्तं तर्पयित्वा, देवान् ऋषीन् पितॄन् भगवदात्मकान् ध्यात्वा, सन्तर्प्य, शुचौ देशे वस्त्रं संपीड्य, आचम्य, आवाहित तीर्थम् आत्मानि मूलमन्त्रेण समाहृत्य, यागभूमिं गच्छेत् ।

सुप्रक्षालित पाणिपादः स्वाचान्तः शुचौ देशे अतिमनोहरे निश्शब्दे भुवं संगृह्य, तां शोषणादिभिः विशोध्य, गुरुपरंपरया परमगुरुं भगवन्तमुपगम्य, तमेव प्राप्यत्वेन प्रापकत्वेन अनिष्टनिवारकत्वेन यथावस्थित स्वरूप रूप गुण विभूति लीलोपकरण विस्तारमनुसन्धाय, तमेव शरणमुपगच्छेत् अखिलहेये त्यादिना ।

एवं शरणमुपगम्य, तत्प्रसादोपबृंहित मनोवृत्तिः, तमेव भगवन्तं सर्वेश्वरेश्वरम् आत्मनः स्वामित्वेन अनुसन्धाय, अत्यर्थप्रियाविरतविशदतम प्रत्यक्षरूपानुध्यानेन ध्यायन् आसीत ।

ततः तदनुभवजनितातिमात्रप्रीतिकारित परिपूर्णकैङ्कर्यरूप पूजामारभेत ।

भगवानेव स्वनियाम्य स्वरूप स्थितिप्रवृत्ति स्वशेषतैकरसेन अनेनात्मना स्वकीयैश्च देहेन्द्रियान्तः करणैः स्वकीय कल्याण तम द्रव्यमयान् औपचारिक सांस्पर्शिकाभ्यवहारिकादि समस्तभोगान् अतिप्रभूतान् अतिप्रियतमान् अति समग्रान् अत्यन्तभक्तिकृतान् अखिलपरिजन परिच्छदान्विताय स्वस्मै स्वप्रीतये स्वयमेव प्रतिपादयितुमुपक्रमते इत्यनुसन्धाय, स्वदेहे पञ्चोपनिषन् मन्त्रान् संहारक्रमेण न्यस्य, प्राणायामेनैकेन दक्षिण पाणिना नाभिदेशे मूलमन्त्रं न्यस्य, मन्त्रोद्भूत चण्डवाय्वाप्यायित नाभिदेशस्थ वायुना शरीरम् अन्तर्बहिश्च सर्व तत्वमयं तत्वक्रमेण विशोष्य, पुनः प्राणायामेनैकेन हृद्देशे मूलमन्त्रं न्यस्य, मन्त्रोद्भूत चक्राग्निज्वालोपबृंहित जाठराग्निना दग्ध्वा, तत्तत् समष्टिप्रलीन सर्व तत्व सर्वकिल्बिष सर्वाज्ञान तद्वासनो भूत्वा भगवद्दक्षिण पादाङ्गुष्ठे मन्त्रेण स्वात्मानं प्रवेशयेत् ।

अपरेण प्राणायामेन भगवत्प्रसादेन भगवत् किङ्करता योग्यतामापाद्य, तस्मादादाय, तद्वामपादाङ्गुष्ठादधस्तात् मन्त्रेण आत्मानं विन्यस्य, देववाम पादाङ्गुष्ठ नखशीतांशु मण्डलात् गलद्दिव्यामृतरसैरात्मान मभिषिञ्चेत् ।

एवम् आत्मानमभिषिच्य, भगवत्प्रसादेन तदमृतमयं सर्व कैङ्कर्यैक मनोहरं सर्वकैङ्कर्यैकयोग्यं शरीरं लब्ध्वा, तस्मिन् शरीरे पञ्चोप निषन्मन्त्रान् सृष्टिक्रमेण विन्यसेत् ।

'ओं षौं नमः, पराय परमेष्ठ्यात्मने नमः, इति मूर्ध्नि स्पृशेत्,

'ओं यां नमः पराय पुरुषात्मने नमः' इति नासिकाग्रे,

'ओं रां नमः पराय विश्वात्मने नमः' इति हृदये,

'ओं वां नमः पराय निवृत्यात्मने नमः' इति गुह्ये,

'ओं लां नमः पराय सर्वात्मने नमः' इति पादयोः,

एवं न्यासं कुर्यात् । तत्तच्छक्ति मयमुद्भूतं देहं ध्यायेत् । पुनरपि प्राणायामेन एकेन देववाम पादाङ्गुष्ठ विनिस्सृतामृतधारया आत्मानमभिषिच्य, कृतलाञ्छनः धृतोर्ध्व पुण्ड्रः भगवद्यागमारभेत ।

भगवानेव सर्वान् कारयतीति पूर्ववत् ध्यात्वा, हृद्यागं कृत्वा, संभारान् संभृत्य, आत्मनो वामपार्श्वे, जलभाजने तोयमुत्पूर्य, गन्धपुष्पयुतं कृत्वा, सप्तकृत्वः अभिमन्त्र्य, विशोष्य दग्ध्वा, दिव्यामृतमयं तोयमुत्पाद्य, अस्त्र मन्त्रेण रक्षां कृत्वा, सुरभिमुद्रां प्रदर्श्य, अन्यानि पूजा द्रव्याणि दक्षिण पार्श्वे निधाय, आत्मनः पुरस्तात् स्वास्तीर्णे पीठे क्रमेण आग्नेयादिषु कोणेषु अर्घ्य पाद्य आचमनीय स्नानीय पात्राणि निधाय, अस्त्रमन्त्रेण प्रक्षाल्य, शोषणादिना पात्राणि विशोध्य, संस्कृततोयेन तानि पूरयित्वा,

अर्घ्य पात्रे—सिद्धार्थक गन्ध पुष्पकुशाग्राक्षतादीनि निक्षिपेत् ,

पाद्यपात्रे दूर्वा विष्णुपर्णी श्यामाकं पद्मकम्,

आचमनीये—एलालवङ्गतक्कोल लामज्जक जाती पुष्पाणि,

स्नानीये—द्वे हरिद्रे मुराशैलेय तक्कोल जटामांसी मलयज गन्ध चम्पक पुष्पाणि, (निक्षिपेत्.)

अन्यस्मिन् पात्रे सर्वार्थ तोयं परिकल्प्य, ततः अर्घ्य पात्रं पाणिना स्पृष्ट्वा, मूलमन्त्रेण अभिमन्त्र्य

ओं नमो भगवते अर्घ्यं परिकल्पयामि' इति अर्घ्यं परिकल्पयेत्, एवमेव पाद्यं परिकल्पयामीति पाद्यं, आचमनीयं परिकल्पयामीति आचमनीयं, स्नानीयं परिकल्पयामीति स्नानीयं, शुद्धोदकं परिकल्पयामीति शुद्धोदकम्,

ततः अर्घ्यजलात् जलं अन्येन पात्रेण आदाय, यागभूमिं सर्वाणि च यागद्रव्याणि आत्मानं च प्रत्येकं संप्रोक्ष्य, आसनं परिकल्पयेत्,

ओं आधार शक्त्यै नमः, ओं प्रकृत्यै नमः, ओं अखिलजगदाधाराय कूर्मरूपिणे नारायणाय नमः, ओं भगवते अनन्ताय नागराजाय नमः, ओं भूं भूम्यै नमः, इति यथा स्थानमुपर्युपरि ध्यात्वा प्रणम्य,

ओं श्रीवैकुण्ठाय दिव्य लोकाय नमः' इति श्रीवैकुण्ठदिव्यलोकं प्रणम्य, ओं श्रीवैकुण्ठाय दिव्य जनपदाय नमः इति, दिव्यजनपदं प्रणम्य, ओं श्रीवैकुण्ठाय दिव्यनगराय नमः इति, दिव्यनगरं प्रणम्य, ओं श्रीवैकुण्ठाय दिव्य विमानाय नमः' इति, दिव्य विमानं प्रणम्य, 'ओं आनन्दमयाय दिव्य मण्टप रत्नाय नमः' इति, मण्टपरत्नं प्रणम्य, तस्मिन् अनन्ताय नमः इति, आस्तरणं प्रणम्य,

तदुपरि ओं धर्माय नमः इति आग्नेय्यां पादं विन्यस्य, ओं ज्ञानाय नमः इति नैर्ऋत्यां, ओं वैराग्याय नमः इति वायव्यां, ओं ऐश्वर्याय नमः इति, ऐशान्यां,

ओं अधर्माय नमः इति प्राच्यां, पीठगात्रं विन्यस्य, ओं अज्ञानाय नमः इति दक्षिणस्यां, ओं अवैराग्याय नमः इति पश्चिमायां, ओं अनैश्वर्याय

नमः इति उत्तरस्यां, एभिः परिच्छिन्नतनुं पीठभूतं सदात्मकं अनन्तं विन्यसेत्,

पश्चात् सर्व कार्योन्मुखं विभुमनन्तं ओं अनन्ताय नमः इति, तस्मिन्नुपरि—ओं पद्माय नमः इति पद्मं विन्यस्य, पूर्वं पत्रे ओं विमलायै नमः इति विमलां चामर हस्तां विन्यस्य, तत आरभ्य प्रादक्षिण्येन ऐशानान्तं पत्रेषु—ओं उत्कर्षिण्यै नमः, ओं ज्ञानायै नमः, ओं क्रियायै नमः, ओं योगायै नमः, ओं प्रह्व्यै नमः, ओं सत्यायै नमः, ओं ईशानायै नमः, इति अष्टशक्तयः, चामरहस्ता विन्यस्तव्याः, ओं अनुग्रहायै नमः इति कर्णिकापूर्वपार्श्वे अनुग्रहां चामर हस्तां विन्यसेत्,

जगत्प्रकृतये योगपीठाय नमः इति योगपीठं सङ्कल्प्य, 'ओं दिव्याय योगपर्यङ्काय नमः' इति दिव्य योगपर्यङ्कं विन्यस्य, तस्मिन् अनन्तं नागराजं सहस्रफणाशोभितं, ओं अनन्ताय नागराजाय नमः' इति, न्यस्य, ओं अनन्ताय नमः इति पुरस्तात् पादपीठं विन्यस्य, सर्वाणि आधार शक्त्यादीनि पीठान्तानि तत्वानि प्रत्येकं गन्धपुष्पधूपदीपैः संपूज्य, सर्वपरिवाराणां तत्तत्स्थानेषु पद्मासनानि सङ्कल्प्य, अनन्तगरुडविश्वक्सेनानां सपीठकं पद्मं विन्यस्य, सर्वतः पुष्पाक्षतान् विकीर्य, योगपीठस्य पश्चिमोत्तर दिग्भागे ओं अस्मद्गुरुभ्यो नमः इति गुरून् गन्धपुष्पधूपदीपैः अभ्यर्च्य, प्रणम्य अनुज्ञाप्य, भगवद्यागमारभेत ।

कल्पिते नागभोगे समासीनं भगवन्तं नारायणं पुण्डरीकदलामलाय ताक्षं किरीट हार केयूर कटकादि सर्वभूषणैर्भूषितं आकुञ्चित दक्षिणपादं

प्रसारित वाम पादं जानुन्यस्तप्रसारित दक्षिणभुजं, नागभोगे विन्यस्तवाम भुजं ऊर्ध्वभुजद्वयेन शङ्खचक्रधरं सर्वेषां सृष्टिस्थिति प्रलयहेतुभूतम्, अञ्जनाभं कौस्तुभेन विराजमानं चकासतं उदग्रप्रबुद्ध स्फुरदपूर्वाचिन्त्य परमसत्त्व पञ्च शक्तिमयविग्रहं पञ्चोपनिषदैः ध्यात्वा आराधनाभिमुखो भवेति मूलमन्त्रेण प्रार्थ्य, मूलमन्त्रेण दण्डवत् प्रणम्य, उत्थाय स्वागतं निवेद्य, यावदाराधन समाप्ति सान्निध्ययाचनं कुर्यात्,

अन्यत्र स्वाभिमते देशे पूजाचेत् एवमावाहनम्

[मन्त्र योगः समाह्वानं करपुष्पोपदर्शनम् ।
बिम्बोपवेशनं चैव योग विग्रहचिन्तनम् ।
प्रणामंच समुत्थानं स्वागतं पुष्पमेव च ।
सान्निध्ययाचनं चेति तत्राह्वानस्य सत्क्रियाः ।

ततो भगवन्तं प्रणम्य दक्षिणतः ओं श्रीं श्रियै नमः इति श्रिय मावाह्य, प्रणम्य, वामे 'ओं भूं भूम्यै नमः, इति मन्त्रेण भुवमावाह्य, तत्रैव नीम् नीलायै नमः इति नीलामावाह्य, 'किरीटाय मकुटाधिपतये नमः' इति उपरि भगवतः पश्चिमपार्श्वे चतुर्भुजं चतुर्वक्त्रं कृताञ्जलिपुटं मूर्ध्नि भगवतः किरीटधरं किरीटाख्य दिव्यभूषणं प्रणम्य, एवमेव ओं किरीटमालायै आपीडात्मने नमः इति, आपीडकं तत्रैव पुरस्तात् प्रणम्य, ओं दक्षिण कुण्डलाय मकरात्मने नमः इति दक्षिणकुण्डलं दक्षिणतः प्रणम्य, ओं वामकुण्डलाय मकरात्मने नमः इति वामकुण्डलं, वामतः प्रणम्य, ओं वैम् वैजयन्त्यै वनमालायै नमः इति वैजयन्तीं पुरस्तात् प्रणम्य, ओं श्रीमत्तुलस्यै

नमः इति तुलसीं देवीं पुरस्तात् प्रणम्य, ओं हाराय सर्वाभरणाधिपतये नमः इति हारं पुरतः प्रणम्य, ओं श्रीवत्साय श्रीनिवासाय नमः इति श्रीवत्सं पुरतः प्रणम्य, ओं श्री कौस्तुभाय सर्वरत्नाधिपतये नमः इति कौस्तुभं सर्वरत्ना धिपतिं पुरतः प्रणम्य, ओं काञ्चीगुणोज्ज्वलाय दिव्य पीताम्बराय नमः इति पीताम्बरं पुरतः प्रणम्य, सर्वेभ्यो दिव्य भूषणेभ्यो नमः इति सर्व भूषणानि पुरतः प्रणम्य,

ओं श्री सुदर्शनाय हेति राजाय नमः इति सुदर्शनात्मानं रक्तवर्णं रक्तनेत्रं द्विभुजं कृताञ्जलिपुटं भगवन्तमालोकयन्तम् तद्दर्शनानन्दो पबृंहितमुखं भगवच्चक्रं मूर्ध्नि धारयन्तं दक्षिणतः प्रणम्य, तत्रैव ओं नन्दकाय खड्गाधिपतये नमः इति नन्दकात्मानं शिरसि खड्गं धारयन्तं प्रणम्य, तत्रैव ओं पद्माय नमः इति पद्मात्मानं शिरसि पद्मं धारयन्तं प्रणम्य ओं पाञ्चजन्याय शङ्खाधिपतये नमः इति शङ्खात्मानं श्वेतवर्णं रक्तनेत्रं द्विभुजं कृताञ्जलिपुटं शिरसि शङ्खं धारयन्तं वामतः प्रणम्य, तत्रैव ओं कौमोदक्यै गदाधिपतये नमः इति गदां देवीं प्रणम्य, तत्रैव ओं शार्ङ्गाय चापाधिपतये नमः इति शार्ङ्गात्मानं प्रणम्य, ओं सर्वेभ्यो भगव द्दिव्यायुधेभ्यो नमः इति, सर्वाणि भगवदायुधानि परितः प्रणम्य,

ओं सर्वाभ्यो भगवत्पादारविन्द संवाहिनीभ्यो नमः इति, दिव्यपादारविन्द संवाहिनीः समन्ततः प्रणम्य, ओं सर्वेभ्यो भगवत्परिचारकेभ्यो नमः इति भगवत्परि चारकान् प्रणम्य, ओं सर्वाभ्यो भगवत्परिचारिकाभ्यो नमः इति भगवत्परि चारिकाः प्रणम्य,

ओं अनन्ताय नागराजाय नमः इति पृष्ठतः अनन्तं भगवन्तं चतुर्भुजं हलमुसलधरं कृताञ्जलि पुटं फणामणि सहस्र मण्डितोत्तमाङ्गं भगवद्दर्शनानन्दोप बृंहित सर्वाङ्गं ध्यात्वा प्रणम्य, ओं सर्वेभ्यो भगवत्परिजनेभ्यो नमः इति अनुक्तासङ्ख्येय परिजनान् समन्ततः प्रणम्य, ओं भगवत्पादुकाभ्यां नमः इति, पादुके पुरतः प्रणम्य, ओं सर्वेभ्यो भगवत्परिच्छदेभ्यो नमः इति, परिच्छदान् समन्ततः प्रणम्य,

ओं वैं वैनतेयाय नमः इति, अग्रतो भगवतः भगवन्तं वैनतेयं आसीनं द्विभुजं कृताञ्जलि पुटं ध्यात्वा प्रणम्य,

ओं श्रीमते विष्वक्सेनाय नमः इति भगवतः प्रागुत्तरे पार्श्वे दक्षिणाभि मुखं भगवन्तं विष्वक्सेनं आसीनं चतुर्भुजं शङ्खचक्रधरं नीलमेघनिभं ध्यात्वा, प्रणम्य, ओं गं गजाननाय नमः, ओं जं जयत्सेनाय नमः, ओं हं हरिवक्त्राय नमः, ओं कं कालप्रकृति संज्ञाय नमः, ओं सर्वेभ्यः श्री विष्वक्सेन परिजनेभ्यो नमः इति श्री विष्वक्सेन परिजनान् प्रणम्य,

ओं चण्डाय द्वारपालाय नमः, ओं प्रचण्डाय द्वारपालाय नमः इति पूर्वं द्वारपार्श्वयोः प्रणम्य,

ओं भद्राय द्वारपालाय नमः, ओं सुभद्राय द्वारपालाय नमः इति दक्षिणद्वार पार्श्वयोः प्रणम्य,

ओं जयाय द्वारपालाय नमः, ओं विजयाय द्वारपालाय नमः इति पश्चिमद्वार पार्श्वयोः प्रणम्य,

ओं धात्रे द्वारपालाय नमः, ओं विधात्रे द्वार पालाय नमः इति उत्तरद्वार पार्श्वयोः प्रणम्य,

एते द्वारपालाः सर्वे शङ्खचक्र गदाधराः आज्ञामुद्राधराः ध्यातव्याः. ओं सर्वेभ्यो भगवद्द्वारपालेभ्यो नमः इति सर्वद्वारेषु सर्वद्वारपालान् प्रणम्य,

ओं कुमुदाय गणाधिपतये सवाहनपरिवार प्रहरणाय नमः इति पूर्वस्यां दिशि पार्षदेश्वरं कुमुदं प्रणम्य, ओं कुमुदाक्षायेत्यादिना आग्नेय्यां कुमुदाक्षं, ओं पुण्डरीकायेत्यादिना दक्षिणस्यां पुण्डरीकं ओं वामनायेत्यादिना निरृत्यां वामनं, ओं शङ्कुकर्णायेत्यादिना, पश्चिमायां शङ्कुकर्णम्, ओं सर्वनेत्रायेत्यादिना वायव्यां सर्वनेत्रं, ओं सुमुखायेत्यादिना उत्तरस्यां सुमुखं, ओं सुप्रतिष्ठितायेत्यादिना ऐशान्यां सुप्रतिष्ठितं प्रणम्य, ओं सर्वेभ्यो भगवत्पारिषदेभ्यो नमः इति, सर्वस्माद्बहिः प्रणम्य,

अन्यत्र बाह्य पूजायां आवाहनस्थानानि परमव्योम क्षीरार्णवादित्य-मण्डलहृदयानि मधुराद्वारकायोध्यादीनि दिव्यावतार स्थानानि च, अन्यानि पौराणिकानि श्रीरङ्गादीनि च, यथारुचि ।

एवं भगवन्तं नारायणं देवी भूषणायुध परिजन परिच्छदैः द्वारपाल पारिषदैः सेव्यमानं, स्वाधीन त्रिविध चेतनाचेतन स्वरूप स्थिति प्रवृत्ति भेदं, क्लेशकर्माद्यशेष दोषा संस्पृष्टं, स्वाभाविका नवधिकातिशय ज्ञान बलैश्वर्य वीर्यशक्तितेजः प्रभृत्य सङ्ख्येय कल्याणगुणगणौघ महार्णवं ध्यात्वा प्रणम्य, मूलमन्त्रेण स्वात्मानं देवाय निवेद्य, प्रणम्यानुज्ञाप्य, भगवत्पूजामारभेत,

पात्रेण (उद्धरिण्या) पूर्वस्थिता दर्घ्यपात्रात् अर्घ्यजलमादाय, पाणिभ्यां घ्राणसममुद्धृत्य, भगवन्निदं प्रतिगृह्णीष्व इति चिन्तयन् भगवन्मुखे दर्शयित्वा भगवद्दक्षिण हस्ते किञ्चित्प्रदाय. अर्घ्यं पतद्ग्रहपात्रे प्रक्षिपेत्, हस्तौ प्रक्षाल्य, पादयोः पुष्पाणि समर्प्य, पाद्यपात्रात् पाद्यजलमादाय, पादयोः किञ्चित् समर्प्य, मनसा पादौ प्रक्षालयन् पाद्यं पतद्ग्रहपात्रे प्रक्षिपेत्,

हस्तौ प्रक्षाल्य, पादौ वस्त्रेण संमृज्य, गन्ध पुष्पाणि दत्वा, आचमनीय पात्रात् आचमनीयमादाय भगवद्दक्षिणहस्ते किंचित् समर्प्य, भगवद्वदने आच मनीयं समर्पितमिति, मनसा भावयन् शेषमाचमनीयं पतद्ग्रहपात्रे प्राक्षिपेत् । ततो गन्धपुष्प धूपदीपाचमन मुखवासताम्बूलादि निवेदनं कृत्वा प्रणम्य, आत्मानं आत्मीयं च सर्वं "भगवन्, नित्यकिङ्करतया स्वीकुरु" इति भगवते निवेदयेत्,

ततः स्नानार्थम् आसनमानीय, गन्धादिभिः अभ्यर्च्य, भगवन्तं प्रणम्य, अनुज्ञाप्य, पादुके प्रदाय, स्नानासनोपविष्टे माल्यभूषण वस्त्राणि अपनीय, विष्वक्सेनाय दत्वा, स्नानशाटिकां प्रदाय, अर्घ्यपाद्याच मनीय पादपीठप्रदान दन्तकाष्ठ जिह्वानिर्लेहन गण्डूष मुखप्रक्षालनाचमन आदर्शप्रदर्शन हस्तप्रक्षालन मुखवास ताम्बूल तैलाभ्यङ्ग उद्वर्तनामलकतोय कङ्कतप्लोत देह शोधनशाटिकाप्रदान हरिद्रालेपन प्रक्षालन वस्त्रोत्तरीय यज्ञोपवीत प्रदान पाद्याचमन पवित्रप्रदान गन्धपुष्प धूपदीपाचमन नृत्तगीत वाद्यादि सर्वमङ्गलसंयुक्ताभिषेक नीराजनाचमन देह शोधन प्लोतवस्त्र उत्तरीय

यज्ञोपवीत आचमन कूर्चप्रसारण सहस्रधाराभिषेक नीराजनाचमन देहशोधन धौतवस्त्रोत्तरीय यज्ञोपवीताच मनानि दद्यात् ।

ततः अलङ्कारासनमभ्यर्च्य प्रणम्य अनुज्ञाप्य, पादुके प्रदाय, तत्र उपविष्टे पूर्ववत् स्नानीयवर्जम् अर्घ्यपाद्याचमनीय शुद्धोदकानि मन्त्रेण कल्पयित्वा भगवते अर्घ्यपाद्याचमनीयानि दत्वा गन्धपुष्प पादसंमर्दन वस्त्रोत्तरीय भूषणोपवीताचमनीयानि दत्वा, सर्वपरिवाराणां स्नानवस्त्रभूषणान्तं दत्वा, गन्धादीन् देवानन्तरं सर्वपरिवाराणां प्रदाय, धूपदीपाचमनान्तं दद्यात्, अथवा सर्वपरिवाराणां गन्धादीनेव दद्यात्, गन्धपुष्प प्रदान अलङ्कार ऊर्ध्वपुण्ड्र अञ्जन आदर्श धूप दीप आचमन ध्वज छत्र चामर वाहन शङ्ख चिह्न काहल भेर्यादि सकल नृत्त गीत वाद्यादिभिः अभ्यर्च्य, मूलमन्त्रेण पुष्पं प्रदाय प्रत्यक्षरं पुष्पं प्रदाय. द्वादशाक्षरेण विष्णु षडक्षरेण विष्णु गायत्र्या पञ्चोपनिषदैः पुरुष सूक्त ऋग्भिः पुष्पं प्रदाय अन्यैश्च भगवन्मन्त्रैः शक्तश्चेत् पुष्पं प्रदाय देव्यादि पारिषदान्तं तत्तन्मन्त्रेण पुष्पं दत्वा प्रणम्य प्रतिदिशं प्रदक्षिण प्रणामपूर्वकं भगवते पुष्पाञ्जलिं दत्वा पुरतः प्रणम्य, श्रुतिसुखैः स्तोत्रैः स्तुत्वा स्वात्मानं नित्यकिङ्करतया निवेद्य तथैव ध्यात्वा, यथाशक्ति मूलमन्त्रं जपित्वा सर्वभोगपूर्णां मात्रां दत्वा मुखवासताम्बूले प्रदाय अर्घ्यं दत्वा, भोज्यासनम् अभ्यर्च्य प्रणम्य, अनुज्ञाप्य, पादुके प्रदाय, तत्रोपविष्टे पाद्याचमनीय अर्हणानि दत्वा, गुडं माक्षिकं सर्पिः दधि क्षीरं चेति पात्रे निक्षिप्य, विशोध्य, अर्घ्यजलेन संप्रोक्ष्य, मधुपर्कम् अवनतशिराः हर्षोत्फुल्लनयनः हृष्टमनाः भूत्वा प्रदाय आचमनं दद्यात्,

यत किञ्चित् द्रव्यं भगवद्देयं तत्सर्वं शोषणादिभिः विशोध्य अर्घ्यजलेन संप्रोक्ष्य दद्यात्, ततश्च गां सुवर्णरत्नादिकं च यथाशक्ति दद्यात् ततः सुसंस्कृतान्नम् आज्याढयं दधि क्षीरमधूनि फलमूलव्यञ्जनानि मोदकांश्च अन्यानि लोके प्रियतमानि आत्मनश्च इष्टानि शास्त्राविरुद्धानि संभृत्य शोषणादि कृत्वा, अर्घ्य जलेन संप्रोक्ष्य, अस्त्रमन्त्रेण रक्षां कृत्वा, सुरभिमुद्रां प्रदर्श्य, अर्हणपूर्वकं हविः निवेदयेत्

"अतिप्रभूतम् अतिप्रियतमम् अति समग्रम् अत्यन्त भक्तिकृतम् इदं स्वीकुरु" इति प्रणामपूर्वकम् अत्यन्तसाध्वसविनयावनतः भूत्वा निवेदयेत्

ततश्च अनुपानतर्पणे प्रदाय, हस्तप्रक्षालन आचमन हस्तसंमार्जन चन्दन मुखवास ताम्बूलादीनि दत्वा, प्रणम्य पुनः मन्त्रासनं कूर्चेन मार्जयित्वा अभ्यर्च्य अनुज्ञाप्य, पादुके प्रदाय, तत्रोपविष्टे गन्धमाल्यादिकम् अपोह्य, विष्वक्सेनाय दत्वा, पादयाचमनीय गन्धपुष्प धूपदीप आचमनापूप फलाचमनादीनि दत्वा, मुखवासताम्बूल नृत्तगीत वाद्यादिभिः अभ्यर्च्य, प्रदक्षिण द्वयं कृत्वा दण्डवत् प्रणम्य,

पर्यङ्कासनम् अभ्यर्च्य अनुज्ञाप्य, पादुके प्रदाय, तत्रोपविष्टे पाद्याचमने दत्वा, माल्यभूषण वस्त्राणि अपनीय, विष्वक्सेनाय दत्वा, सुखशयनोचितं सुखस्पर्शं वासः तदुचितानि भूषणानि उपवीतं च प्रदाय, आचमनीयं दत्वा, गन्धपुष्प धूपदीपाचमन मुखवासताम्बूलादिभिः अभ्यर्च्य, स्वनियाम्य स्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेन अनेन आत्मना कर्त्रा स्वकीयैश्च

देहेन्द्रियान्तः करणैः स्वकीयकल्याणतम द्रव्यमयान् औपचारिक सांस्पर्शिक आभ्यवहारिकादि समस्तभोगान् अति प्रभूतान् अतिप्रियतमान् अतिसमग्रान् अत्यन्तभक्तिकृतान् अखिलपरिजन परिच्छदान्विताय स्वस्मै स्वप्रीतये स्वयमेव प्रतिपादितवान् इति अनुसन्धाय भगवन्तमनुज्ञाप्य, भगवन्निवेदितात् हविषः विष्वक्सेनाय किञ्चित् उद्धृत्य निधाय अन्यत्सर्वं स्वाचार्य प्रमुखेभ्यः वैष्णवेभ्यः प्रदाय भगवद्यागशिष्टैः जलादिभिः द्रव्यैः विष्वक्सेनम् अभ्यर्च्य, पूर्वोद्धृतं हविश्च दत्वा, तदर्चनं परिसमाप्य, भगवन्तम् अष्टाङ्गेन प्रणम्य, शरणमुपगच्छेत् ।

मनोबुद्ध्यभिमानेन सहन्यस्य धरातले
कूर्मवत् चतुरः पादान् शिरस्तत्रैव पञ्चमम् ।
प्रदक्षिण समेतेन एवं रूपेण सर्वदा ।
अष्टाङ्गेन नमस्कृत्य ह्युपविश्याग्रतो विभोः ।
उरसा शिरसा चैव वपुषा मनसा गिरा
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोष्टाङ्ग उच्यते ।

इत्युक्तः अष्टाङ्गप्रणामः । शरणागति प्रकारश्च पूर्वोक्तः । ततः अर्घ्यजलं प्रदाय भगवन्तम् अनुज्ञाप्य पूजां समापयेत्

इति श्री भगवद्रामानुज विरचित नित्याख्य
भगवदाराधन प्रयोगः संपूर्णः ॥

---

श्रीमते रामानुजाय नमः.

## श्री व ङ्कि वं शे श्व र म हा दे शि क वि र चि ताः

## ।। आ ह्नि क का रि काः ।।

---

श्रियः पतिं जगद्योनिं प्रणम्य पुरुषोत्तमम् ।
कथयामि यथाशक्ति तत्पूजाक्रममञ्जसा ।। १ ।।

ब्राह्मे मुहूर्ते संप्राप्ते त्यक्त्वा निद्रां प्रसन्नधीः ।
हरिर्हरिर्हरिरिति व्याहरेद्वैष्णवः पुमान् ।। २ ।।

उत्थाय शयने तस्मिन् आसीनो नियतेन्द्रियः ।
त्रस्तनिर्विण्ण हृदयः व्यर्थं वीक्ष्य गतं वयः ।। ३ ।।

तापत्रयेण चाक्रान्तः तीव्रेणाध्यात्मिकादिना ।
दावजेनाग्निना लीढः भ्राम्यन्निव वने मृगः ।। ४ ।।

संसारवागुरान्तस्थः लूनपक्ष इवाण्डजः ।
अपश्यन् निर्गमोपायमागामिष्वपि जन्मसु ।। ५ ।।

अकार्यै रतिबीभत्सैः क्रियमाणैः कृतैरपि ।
लज्जितश्च विषण्णश्च स्मर्यमाणैः स्वकर्मभिः ।। ६ ।।

अविनीतमशिक्षार्हम् असद्गुणगणाकरम् ।
अवधार्य स्वमात्मानम् अचिदाद्यशुभाश्रयम् ।। ७ ।।

दह्यमानेन्धनान्तस्थः विस्फुटन्निव कीटकः ।
अलब्धनिर्गमस्तिष्ठन् मध्ये मरणजन्मनोः ॥ ८ ॥

विह्वलश्च विषण्णश्च विमृशन् स्वामिमाम् दशाम् ।
चिन्तयेत् प्रथमं चैवम् आचरन् हितमात्मनः ॥ ९ ॥

संसारचक्रमारोप्य बलिभिः कर्मरज्जुभिः ।
कालेनाकृष्यमाणस्य जङ्गमस्थावरात्मनः ॥ १० ॥

अहो मे महती याता निष्फला जन्मसन्ततिः ।
अनाराधित गोविन्द चरणाम्भोरुह द्वया ॥ ११ ॥

अनास्वादित सत्कर्म ज्ञानभक्ति सुधारसा ।
अदृष्टानन्त संसार सागरोत्तारण प्लवा ॥ १२ ॥

श्रुतिस्मृत्युदिताशेष सदाचार पराङ्मुखी ।
अनुपासित सद्वृद्धा स्वीकृता सत्समागमा ॥ १३ ॥

असंपादित शुश्रूषा गुर्वाचार्य पितृष्वपि ।
त्यक्तवर्णाश्रमाचारा भ्रष्टा वैदिक वर्त्मनः ॥ १४ ॥

निजकर्मज देवादि देहाध्यस्तात्मभावना ।
तद्भावनानुगोद्भूत सुखदुःख व्यवस्थितिः ॥ १५ ॥

अनुद्भूतस्वयाथात्म्य ज्ञानजोत्तम निर्वृतिः ।
पशुवत् प्राकृतैरेव गुणैरधिकनिर्वृता ॥ १६ ॥

न कर्मनिष्ठा नात्मज्ञा नापि भक्तियुता हरौ ।
नोद्युक्ता भक्ति हीनत्वात् तत्क्रिया स्वर्चनादिषु ॥ १७ ॥

कर्मभिः पुण्य पापाख्यैः अविद्यापरनामभिः ।
धूमैरिवार्चिराग्नेयं ज्ञानमावृत्य देहिनः ॥ १८ ॥

भूषयित्वा स्वकं देहं शब्दाद्यैः स्वाश्रयैः गुणैः ।
दर्शयित्वा स्वसौन्दर्यम् आत्मने तिष्ठमानया ॥ १९ ॥

निरस्तातिशयाह्लाद सुखभावैक लक्षणम् ।
संछाद्य स्वगुणैरेव स्वरूपं परमात्मनः ॥ २० ॥

गुणमय्या प्रकृत्याख्य भगवन्मायया नया ।
स्वसंलीनानन्त जीव कृतकर्मानुरूपतः ॥ २१ ॥

गुणत्रयाश्रयानन्त विचित्र परिणामया ।
अतिदुस्तरया देव प्रपत्तिरहितात्मभिः ॥ २२ ॥

प्रलोभ्यमाना सततं तयैवात्यन्त निर्वृता ।
अजानतीतु स्वहितं मूकस्वप्नानुकारिणी ॥ २३ ॥

निष्पानीये निरालम्बे निच्छाये निरपाश्रये ।
द्राघीयस्य शुभे मार्गे यमस्य सदनं प्रति ॥ २४ ॥

गच्छतो मेऽसहायस्य वर्धयन्ती भयं महत् ।
अतीतापि सदैवैषा तिष्ठतीव पुरो मम ॥ २५ ॥

गतयापी दृशं रूपं वर्तमानेपि जन्मनि ।
तथैव सुमहान् कालः गतः क्षण इवाल्पकः ॥ २६ ॥

अलब्ध सुखसंस्पर्शो ह्यकृताघौघ निष्कृतिः ।
विनैव हरिपादार्चाम् अहो पश्यत एव मे ॥ २७ ॥

किं करिष्यामि पदयोः निपतिष्यामि कस्य वा ।
दुस्तरां मद्दशामेतां कथयिष्यामि कस्य वा ॥ २८ ॥

सा त्वि क धृ तिः—

इति निर्विद्य तदनु धृतिमालम्ब्य सात्विकीम् ।
विधूय चेमं निर्वेदं सर्व कार्यावसादकम् ॥ २९ ॥

उद्धरिष्यन् स्वमात्मानं मज्जन्तं भवसागरे ।
पुनर्निश्चिनुया देवं स्थिरधीः स्वार्थ सिद्धये ॥ ३० ॥

गतमेव गतम् जन्म कानु तत्र प्रति क्रिया ।
प्रवहत्येव हि जले सेतुः कार्यो विजानता ॥ ३१ ॥

इदानीं कर्तुमेतावत् शक्यं काले गते सति ।
मया त्महित कामेन बिभ्यता भवसागरात् ॥ ३२ ॥

पा श्च का लि क क्रि या सं क ल्पः—

इत ऊर्ध्वमहं तावत् यावज्जिवं श्रियः श्रियः ।
पदयोरर्चनं कर्तुं यतमानस्समाहितः ॥ ३३ ॥

अभिगच्छन् हरिं प्रातः पश्चात् द्रव्याणि चार्जयन् ।
अर्चयंश्च ततो देवं ततो मन्त्रान् जपन्नपि ॥ ३४ ॥

ध्यायन्नपि परं देवं काले प्रूक्तेषु पञ्चसु ।
वर्तमान स्सदा चैवं पाञ्चकालिक वर्त्मना ॥ ३५ ॥

स्वार्जितैः गन्धपुष्पाद्यैः शुभैः शक्त्यनुरूपतः ।
आराधयन् हरिं भक्त्या गमयिष्यामि वासरान् ॥ ३६ ॥

एतत्क्रिया विरोधीनि प्राचीनान्यशुभानि मे ।
कर्माण्यनन्तान्यच्छेद्यानि अनादीन्य शुचीन्यपि ॥ ३७ ॥

त्वयैव कृपया देवो विनाशयास्मन् मनोरथान् ।
पूरयात्विति संप्रार्थ्य मन्त्रमेत मुदीरयेत् ॥ ३८ ॥

त्वय्याराधन कामोयं व्रतं चरितु मिच्छति ।
सङ्कल्प सिद्ध्यै भगवन् पूरयास्य मनोरथान् ॥ ३९ ॥

भगवद्ध्यानक्रमः—

इति संप्रार्थ्य तत्सिद्ध्यै संस्मरेत् प्रथमं हरिम् ।
भोगि भोगासनासीनं श्रिया भूम्या च संयुतम् ॥ ४० ॥

चतुर्बाहु मुदाराङ्गं चक्राद्यायुध भूषणम् ।
पीते वसानं वसने चारुपद्माव तंसकम् ॥ ४१ ॥

किरीट हार केयूर कटकादि विभूषितं ।
शक्रचाप तटिन्माला विचित्रमिव तोयदम् ॥ ४२ ॥

सेवितं सूरिभिर्नित्यैः शेषशेषाशनादिभिः ।
परस्मिन् व्योम्नि सचिवैः अन्यैः पारिषदैरपि ॥ ४३ ॥

भगवन्नाम जपः—

एव मेव सुसङ्कल्प सिद्ध्युपायतया श्रितः ।
चिकीर्षन्नीप्सितं कर्म तन्नामान्यनुकीर्तयेत् ॥ ४४ ॥

चतुर्भि र्वासुदेवाद्यैः नामभिस्सह संयुतम् ।
जपेत् द्वादश नामानि केशवादीनि चादरात् ॥ ४५ ॥

दशावतार नामानि मत्स्यकूर्मादि कान्यपि ।
जपन्नुत्थाय शयनात् अर्चयिष्यन् सदा हरिम् ॥ ४६ ॥

स्नान विधिः—

ततो भूधर मन्त्रेण न्यस्य वामपदं भुवि ।
गृहीतस्नान संभारः निष्क्रम्य भवनात् स्वकात् ॥ ४७ ॥

द्वित्रेषु पात प्रमिताम् अतिक्रम्य भुवं बहिः ।
विण्मूत्रादि विसृज्याथ कृत्वा शौचं च शास्त्रतः ॥ ४८ ॥

ततस्तीर्थे समाश्रित्य शुद्धं भागवता श्रितं ।
निरस्याशुचि वस्त्रादि तीरं संशोध्य वारिभिः ॥ ४९ ॥

क्षालिताङ्घ्रिकरो मृद्भिः वारिभिश्च यथाक्रमम् ।
समाचम्य यथाशास्त्रं कृत्वा दन्त वि शोधनं ॥ ५० ॥

समाचम्य शुचौ देशे गृह्णीयात् स्नानमृत्तिकाम् ।
अस्त्राभिमृष्टैः काष्ठाद्यैः स्वमन्त्रेणैव वाग्यतः ॥ ५१ ॥

तां विभज्य द्विधा तीरे न्यस्याद्यर्धं मृदोस्तयोः ।
भागे नैकेन महता देहं प्रक्षाळ्य सर्वतः ॥ ५२ ॥

ततो जलं प्रविश्य त्रिः निमज्योत्तीर्य संयतः ।
आसीनः शोधिते तीरे समाचम्य यथा विधि ॥ ५३ ॥

अन्यं मृद्भागमादाय न्यसे द्दक्षिण पाणिना ।
वामपाणि तलस्यादौ मध्येन्ते च समन्त्रकम् ॥ ५४ ॥

तत आदिम मृद्भागम् अन्तर्वारिणि निक्षिपेत् ।
पीठार्थ मागमिष्यन्त्याः गङ्गायाः स्नातुमात्मनः ॥ ५५ ॥

मध्यस्थेन मृदंशेन बध्नीयात् सकला दिशः ।
साङ्गुष्ठ तर्जन्यास्त्रेण स्नानविघ्नकरान् क्षिपेत् ॥ ५६ ॥

पश्चादग्रिमभागेन स्वगात्रमनु लिप्य च ।
स्वमन्त्रेणैव पाणिभ्यां प्रविशेच्च जलं ततः ॥ ५७ ॥

पाणिभ्यां जलमादाय तीर्थायार्घ्यप्रदित्सया ।
तिष्ठन्नावाहये द्गङ्गां सर्वतीर्थं समन्विताम् ॥ ५८ ॥

गङ्गावाहन मन्त्रः—

आवाहयामि त्वां देवि स्नानार्थ मिह सुन्दरि ।
एहि गङ्गे नमस्तुभ्यं सर्व तीर्थ समन्विते ॥ ५९ ॥

विष्णु वाम पदाङ्गुष्ठ नखस्रोतो विनिस्सृते ।
तद्भक्ति विघ्नरूपात्त्वं गङ्गे मां मोचयैनसः ॥ ६० ॥

एवमुच्चार्य दत्वार्घ्यं गङ्गायै सुरसिन्धवे ।
तोयमादाय पाणभ्यां त्रिर्मन्त्रेणाभिमन्त्र्य तत् ॥ ६१ ॥

त्रिः पञ्चकृत्वो वा तेन सिञ्चेन् मूर्धान मात्मनः ।
ततो दक्षिण हस्तेन समादाय जलं शुचि ॥ ६२ ॥

त्रिर्वाथ पञ्चकृत्वो वा स्वमन्त्रेणाभिमन्त्र्य तत् ।
पीत्वा पुनस्समाचम्य प्रोक्षये दात्मनस्तनुम् ॥ ६३ ॥

स्वेन मन्त्रेण तदनु निमग्नस्तज्जले चिरम् ।
निधायाधः स्वमात्मानं पादयोः परमात्मनः ॥ ६४ ॥

भोगिभोगासनस्थस्य ध्यातस्याथ जगद्विभोः ।
भक्तिनिघ्नेन मनसा स्वकं मन्त्रमनुस्मरन् ॥ ६५ ॥

यावच्छक्ति निमग्नोथ समुन्मज्य जलात्ततः ।
आदित्यमण्डलान्तस्थं हरिं ध्यात्वा भिवीक्ष्य च ॥ ६६ ॥

उत्तीर्याचम्य तीरस्थो वासो विपरि वर्त्य च ।
स्नान शाटीमनिष्पीड्य विनिक्षिप्य स्वपार्श्वतः । ६७ ॥

मन्त्र स्नानम्—

आसीनः पुनरप्येवं मन्त्रस्नानं समाचरेत् ।
जपन्पवित्रं मन्त्रं स्वं प्राणायाम समन्वितम् ॥ ६८ ॥

असङ्ख्येया शुचिस्पर्श दूषितैर्बा ह्यवारिभिः ।
स्नातस्यापि भवेदेतत् स्नानमन्यस्य किं पुनः ॥ ६९ ॥

ध्यान स्नानम्—

ध्यान स्नानं ततः कुर्यात् द्राभ्याम् अपि परन्तु यत् ।
स्वस्थितं पुण्डरीकाक्षं मन्त्रमूर्तिं हरिं प्रभुम् ॥ ७० ॥

स्मरेत्पादोदजां धारां पतन्तीं स्वस्य मूर्धनि ।
चिन्तयेत् ब्रह्मरन्ध्रेण प्रविशन्तीं स्विकां तनूम् ॥ ७१ ॥

तया संक्षालयेत्सर्वं मन्तर्बाह्य गतं मलम् ।
तत्क्षणात् विरजामन्त्वैः जातः स्फाटिक सन्निभः ॥ ७२ ॥

सन्ध्योपासनादि विधिः—

धृतोर्ध्वपुण्ड्रो देवर्षीन् पितॄन् सन्तर्प्य मन्त्रतः ।
प्रयतः परया भक्त्या स्वकर्माराध्यमच्युतम् ॥ ७३ ॥

आदित्यमण्डलान्तस्थं प्रणम्य मनसा स्मरन् ।
सन्धातृत्वेन सर्वेषां सन्ध्येति परिकीर्तितम् ॥ ७४ ॥

श्रुतिस्मृत्युदितं सर्वं स्ववर्ण स्वाश्रमोचितम् ।
फलाभिसन्धिर हितं परब्रह्मार्चनात्मकम् ॥ ७५ ॥

न्यस्य कर्तृत्व भोक्तृत्वे स्वामित्वं च परात्मनि ।
नित्यनैमित्तिकैः काम्यैः कर्मभिश्च समन्वितः ॥ ७६ ॥

गायत्री जपपर्यन्तं मन्त्राचमन पूर्वकं ।
सान्ध्यं कर्माखिलं साधु समाप्य च यथा विधि ।। ७७ ।।

ततः स्वकर्मभोक्तारम् आदित्यान्तरवस्थितम् ।
उपस्थाय स्वकैर्मन्त्रैः नारायणमतन्द्रितः ।। ७८ ।।

ततः आधार शक्त्यादीन् तर्पयित्वा स्वनामभिः ।
नमोन्तैः प्रणवोपेतैः निष्पीड्य स्नानशाटिकाम् ।। ७९ ।।

आवाहिताश्च गङ्गाद्याः तत्तन्मन्त्र गणं तथा ।
अनुज्ञाप्य समारोप्य स्वात्मन्येव समाहितः ।। ८० ।।

ततः कुम्भं समादाय शुचिना पूर्व वारिणा ।
हरेराराधनार्थाय मौनी नियतमानसः ।। ८१ ।।

पाषण्डावेक्षणादीनि वर्जयन् यत्नतः पथि ।
ध्यायन् नारायणं देवं यागभूमिं समाश्रयेत् ।। ८२ ।।

अग्निपरिचर्या विधिः—

ततः प्रक्षाल्य चरणौ स्वाचान्तस्सुसमाहितः ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थो थवा यतिः ।। ८३ ।।

स्ववर्ण स्वाश्रमार्हेण विधिना श्रद्धयान्वितः ।
समिदाज्यादिभिर्द्रव्यैः मन्त्रैरपि यथोदितैः ।। ८४ ।।

हुत्वाग्नीन् अग्निहोत्रादौ उक्तं कालमपि क्षिपन् ।
पराराधनरूपेण कृतेनैव स्वकर्मणा ।। ८५ ।।

कृते निष्कल्मषे शुद्धे स्वस्मिन् मनसि सुस्थिते ।
लब्धाधिकारो देवस्य ध्यानार्चन जपादिषु ॥ ८६ ॥

विनिष्क्रम्याग्नि शालायाः गत्वा देवगृहं स्वकम् ।
अर्चयित्वा परात्मानं देशकालाद्यपेक्षया ॥ ८७ ॥

पत्रैः पुष्पैः फलैर्वापि पूज कालोक्त वर्त्मना ।
केवलाञ्जलिना वापि विहितेन यथा तथा ॥ ८८ ॥

उपादान विधिः—

प्राप्ते चाह्नो द्वितीयांशे स्वास्त्र मन्त्रेण धर्मतः ।
अर्जयित्वार्चनाद्रव्यं अशेषञ्च यथोदितम् ॥ ८९ ॥

माध्यन्दिन कर्मविधिः—

ततो माध्यंदिनं कर्म स्वोचितं श्रुतिचोदितम् ।
स्नानादि ब्रह्मयज्ञान्तं कृत्वाखिलमतन्द्रितः । ९० ॥

इज्यारम्भः—

इज्या काले तु संप्राप्ते हृष्टो देव गृहं गतः ।
प्रक्षाल्य पादौ पाणीच समाचम्य स्मरन् हरिम् ॥ ९१ ॥

तत्क्षेत्राधीशमभ्यर्च्य स्वमन्त्रेणाच्युतं प्रभुम् ।
देवपूजागृहद्वारात् स्थित्वा बहिरदूरतः ॥ ९२ ॥

चण्डप्रचण्ड प्रमुखान् द्वास्थान् तदधिपानपि ।
प्रणम्याभ्यर्च्य गन्धाद्यैः याचित्वात्म प्रवेशनम् ॥ ९३ ॥

दत्ताभ्यनुज्ञस्तैश्चापि सदयैरवलोकनैः ।
प्रविशन् द्वारपार्श्वस्थः स्वास्त्रमन्त्राभि मन्त्रितम् ॥ ९४ ॥

पुष्पं देवगृहस्यान्तः प्रास्य दक्षिण पाणिना ।
तद्भयादपया तेषु दुष्टसत्वेषु तद्गृहात् ॥ ९५ ॥

प्रथमं दक्षिणं पादं विन्यस्यान्तः प्रविश्य च ।
प्रणिनंसुः परात्मानं भक्तिनिघ्नेन चेतसा ॥ ९६ ॥

प्रदक्षिणप्रणामविधिः—

मनो बुध्द्यभिमानेन सह न्यस्य धरातले ।
कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ॥ ९७ ॥

प्रदक्षिण समेतेन त्वेवम् रूपेण याजकाः ।
अष्टाङ्गेन प्रणामेन प्रणमेत्पुरुषोत्तमम् ॥ ९८ ॥

यागभूमिसंशोधनम्—

ततस्संमार्ज्य तं देशं गोमयेनोपलिप्य च ।
साक्षतानि च पुष्पाणि प्रकीर्य च समन्ततः ॥ ९९ ॥

धूपयित्वा बहुविधैः कर्पूरागरुचन्दनैः ।
पुरस्ताद्देव देवस्य संस्तीर्यासनमात्मनः ॥ १०० ॥

आसन क्रमः—

दार्भं काष्ठमयं वापि सास्त्र च्छोटाभि वीक्षितम् ।
तत्रैकाग्रं मनः कृत्वा यत चित्तेन्द्रिय क्रियः ॥ १०१ ॥

प्रवेश्यो भयजान्वन्तः स्वपादाङ्गुष्ठयोर्युगम् ।
दक्षिणोत्तर मासीनः स्वस्तिके नासनेन तु ॥ १०२ ॥

पद्मादिष्वास नेष्वेक मवलम्ब्येच्छया थवा ।

भगवद्ध्यानम्—

इति संचिन्तयेत् पूर्वम् आरिराधयिषु र्हरिम् ॥ १०३ ॥

स्वसंकल्प पराधीन स्वरूपस्थिति वृत्तिना ।
स्वशेष तैकरूपेण स्वदेहेना त्मनामुना ॥ १०४ ॥

स्वैरेव करणैः सर्वैः बुद्धिकर्मात्मकै रपि ।
गन्धादिभि स्तथा द्रव्यैः स्वकीयैरेव संप्रति ॥ १०५ ॥

सपत्नीकं ससचिवं सद्वारपगणेश्वरम् ।
स्वयमेव स्वमात्मानम् अर्चयत्यपदिश्य माम् ॥ १०६ ॥

स्वयैव कृपया देवः श्रीपतिः पुरुषोत्तमः ।
इत्येव मनुसन्धाय पुनश्चैव मनुस्मरेत् ॥ १०७ ॥

तत्प्रेरित स्तदीयश्च तद्दत्त मति शक्तितः ।
तदात्मक स्तदाधारः तत्प्रीत्यै तत्पदाश्रितः ॥ १०८ ॥

तद्दत्तैरेव तद्द्रव्यैः तत्पूजां करवाण्यहम् ।
संचिन्त्यैवं स्वमात्मानं तत्क्रिया योग्यतां नयेत् ॥ १०९ ॥

भूतशुद्धिक्रमः,

तत्र संहारन्यासः—

अनेन विधिना कुर्यान्नित्यं देहात्मशोधनम् ।
त्रिर्वाथ पञ्चकृत्वो वा प्राणानायम्य सुस्थिरः ॥ ११० ॥

ततो दक्षिण पाण्यन्तः न्यस्य मन्त्रं धियात्मनः ।
तं विदध्यात् स्वनाभ्यन्तः पाणिना प्राणसंयमः ॥ १११ ॥

तन्मन्त्रत स्समुद्भूतैः शोषणैश्चण्डमारुतैः ।
संशोषयेत् स्वकं देहं प्राचीनैः कर्मभिस्सह ॥ ११२ ॥

अथ विन्यस्य हृदये पूर्ववत् पाणि ना मनुम् ।
तत उद्भूत चक्राग्नि ज्वालया दाहयेत्तनुम् ॥ ११३ ॥

ततो मस्तक विन्यस्त मन्त्रोद्भूतामृत द्युतेः ।
रश्मिभिः प्लावये द्दग्धं स्वकं देहं सुधामयैः ॥ ११४ ॥

ततः पाद उपस्थे च हृदि वक्त्रे शिरस्यपि ।
पञ्चोपनिषदो न्यस्य पृथिव्याद्यधि देवताः ॥ ११५ ॥

ततोप्येवं क्रमेणैव स्वदेहे भूतपञ्चकम् ।
कारणे कारणे स्वस्मिन् न्यस्तैर्मन्त्रै र्विलापयेत् ॥ ११६ ॥

पदजान्वन्तरं भूमिः जानुकट्यन्तरं जलम् ।
हृत् कट्योरन्तरं तेजः वायुर्नासाहृदन्तरम् ॥ ११७ ॥

व्योम नासा शिरोमध्यमेवं देहे व्यवस्थितिः ।
तस्मात्ततस्ततस्तानि समुत्थाप्य विलापयेत् ॥ ११८ ॥

पृथिवी मप्सु ताश्चाग्नौ तं वायौ तंच खे क्रमात् ।
तमप्यहंकृतौ ताञ्च सविकारां महत्यपि ॥ ११९ ॥

महान्तं प्रकृतौ ताञ्च तमस्येतत् परात्मनि ।
ततो विमुक्तमात्मानं विमुक्तं तत्व पञ्जरात् ॥ १२० ॥

विमुक्तं मेघपटलात् दिवाकरमिवोज्वलम् ।
ततः प्रकृतिसंसर्गात् अनादेरशुचेस्ततः ॥ १२१ ॥

अशुद्धं शुद्धतां नेतुं शुभाश्रयवशेन तु ।
भगवद्दक्षिणाङ्घ्र्यब्ज शुभाङ्गुष्ठं प्रवेशयेत् ॥ १२२ ॥

तत्प्रवेशात् परां शुद्धिं गतं विगतकल्मषं ।
तत आदाय तद्वामपादाम्भोजादधो नयेत् ॥ १२३

तत एनं तदङ्गुष्ठ नखस्रोतो विनिःसृतैः ।
दिव्यामृत जलै र्गाङ्गैः आत्मानमभिषेचयेत् ॥ १२४ ॥

सृष्टिन्यासः—

तज्जलं दिव्यममृतं प्रसादात् परमात्मनः ।
अनघं घनतां गत्वा वपुरस्योपजायते ॥ १२५ ॥

तदेव भूयो विदधत् पञ्चशक्तिमयं वपुः ।
सृष्टिक्रमेण विन्यस्य पञ्चोपनिषदो धिया ॥ १२६ ॥

मूर्धादिचरणान्तेषु स्वकीयाङ्गेषु पञ्चसु ।
चिन्तयेच्च पुनश्चैवं शरीरोत्पत्तिमात्मनः ॥ १२७ ॥

रजस्तमोभ्यामस्पृष्टा शुद्धसत्वमयी शुभा ।
प्रकृतिर्जायते दिव्या परस्माद्ब्रह्मणस्ततः ॥ १२८ ॥

महान् सत्वमयस्तस्मात् अहङ्कारश्च सात्विकः ।
तस्मात् सत्वमयैर्जातैः इन्द्रियैर्ज्ञानहेतुभिः ॥ १२९ ॥

श्रोत्रत्वग्रसनाघ्राणैः कर्माख्यैः पञ्चभिः सह ।
पायूपस्थ पाणिपाद वाग्भिश्च मनसा सह ॥ १३० ॥

खवाय्वग्न्यम्बु भूमी भिः महाभूतैश्च सात्विकैः ।
शब्दस्पर्शरूपरसगन्धै भूतगुणैरपि ॥ १३१ ॥

एभिश्चतुर्विंशतिभिः तत्वैर्जातं वपुः स्वकम् ।
विष्णु वामपदोद्भूत गङ्गया प्लावयेत्ततः ॥ १३२ ॥

मन्त्रन्यासः—

ततः स्वहस्तौ मन्त्रेण त्रिरामृज्य परस्परम् ।
निधाय व्यापकन्यासं शुद्धयोर्हस्तयोर्द्वयोः ॥ १३३ ॥

वर्णन्यासः—

वर्णन्यासं ततः कुर्यात् प्रथमं दक्षिणे करे ।
तर्जन्यादि कनिष्ठान्तम् अङ्गुळी मध्यपर्वसु ॥ १३४ ॥

मन्त्रादौ श्चतुरो वर्णान् नादान्तान् प्रणवादिकान् ।
अङ्गुष्ठेनैव विन्यस्य प्रणवं चान्यपर्वसु ॥ १३५ ॥

अङ्गुष्ठेनैव सव्येपि वर्णान्मन्त्रस्य चापरान् ।
नादान्तान् प्रणवोपेतान् न्यसेत् सर्वेषु पर्वसु ॥ १३६ ॥

प्रणवंच यथापूर्वं पार्श्वे पर्वसु योजयेत् ।
वर्णान् न्यस्याङ्गुळीष्वेवं तास्वङ्ग न्यासमाचरेत् ॥ १३७ ॥

हृदयं दक्षिणे ङ्गुष्ठे तर्जन्या विनिवेशयेत् ।
अङ्गुष्ठाग्रेण मूर्धादि तर्जन्यादिषु योजयेत् ॥ १३८ ॥

नयनं वामतर्जन्या तदङ्गुष्ठे निवेशयेत् ।
अङ्गुष्ठे नोदरादीनि तर्जन्यादिषु योजयेत् ॥ १३९ ॥

अङ्गुष्ठाभ्यां जानुपादौ न्यसे दक्षिण सव्ययोः ।
अव्युच्छिन्न क्रमेणैव यथा स्वाङ्गुळिमूर्धसु ॥ १४० ॥

व्यापकन्यासः—

ततो देहेपि तदनु व्यापक न्यासमाचरेत् ।
शिरः प्रभृति पाणिभ्यामापादाभ्यां स्वपार्श्वयोः ॥ १४१ ॥

त्रिः स्पृशन् स्वेन मन्त्रेण वेष्टयन्निव वर्मणा ।
मन्त्रवर्णान् स्वदेहेऽपि न्यसे देव मतन्द्रितः ॥ १४२ ॥
नाभ्यामोंकारमङ्गुष्ठ कनिष्ठाभ्यां निवेशयेत् ।

स्थि ति न्या सः—

सनादं प्रणवोपेतं स्थितिन्यास चिकीर्षया ॥ १४३ ॥
द्वितीयंच तृतीयं चाप्युपस्थे जानुनोरपि ।
साङ्गुष्ठाभिश्च तिसृभिः अङ्गुळीभिर्यथाक्रमम् ॥ १४४ ॥
न्यसेच्चतुर्थं सर्वाभिः पादयोः पृष्ठतः पुमान् ।
पञ्चमं मध्यया मूर्ध्नि न्यस्य षष्ठं दृशोरपि ॥ १४५ ॥
मध्ययैव सतर्जन्या युगपत् संनिवेशयेत् ।
साङ्गुष्ठया नामिकया सप्तमं मुखमध्यतः ॥ १४६ ॥
घ्राणस्य पुरतो न्यस्य हृदये चान्त्य मक्षरम् ।
साङ्गुष्ठ तर्जन्यग्रेण न्यसेदेवं यथाक्रमम् ॥ १४७ ॥

अ ङ्ग न्या सः—

अङ्गन्यासं ततः कुर्यात् अङ्गमन्त्रान् यथाक्रमम् ।
हृदि मूर्ध्नि शिखायांच कण्ठकटयोश्च मध्यमे ॥ १४८ ॥
शरीरे स द्वये चापि नेत्रयोरुदरे तथा ।
पृष्ठबाहूरुजान्वङ्घ्रि युगळेषु यथोचितान् ॥ १४९ ॥

साङ्गुष्ठतर्जन्यग्रेण सास्त्रच्छोटेन सर्वशः ।
बध्वा दिशश्च पूर्वाद्याः वह्न्याद्या विदिशस्तथा ॥ १५० ॥

तेनैव भ्रामयन्नस्त्रं कुर्यात् प्राकारमात्मनः ।
कवचेन च मन्त्रेण कुर्याद्देहावकुण्ठनम् ॥ १५१ ॥

अङ्गमन्त्रा मन्त्रवर्णा नादान्ताः प्रणवादिकाः ।
ज्ञानैश्वर्य शक्तिबल वीर्यतेजः पदैर्युताः ॥ १५२ ॥

चतुर्थ्यन्तैस्तथा स्वाङ्गैः हृदयाद्यैः समन्विताः ।
तेजसे इति संयुक्ताः षट्स्वङ्गेषूर आदिषु ॥ १५३ ॥

य इत्यनेन बीजेन युताः पृष्ठादि पञ्चसु ।
संक्षेपतोङ्गन्यासोयं सविस्तारोपि कीर्त्यते ॥ १५४ ॥

विस्तृतन्यासः—

ओंकारात् परतो युञ्ज्यात् नादान्तान् प्रणवादिकान् ।
ज्ञानाय हृदयायेति नमश्चैव यथा क्रमम् ॥ १५५ ॥

मन्त्रमेनं हृदि न्यस्य तर्जन्याङ्गुष्ठयुक्तया ।
(ओम्) नम् ऐश्वर्याय शिरसे स्वाहेति पदसंयुतम् ॥ १५६ ॥

अनङ्गुष्ठाङ्गुळीभिस्तु न्यसेन्मस्तक मध्यतः ।
शक्त्यै शिखायै वौषडित्येतन् मोंकारसंयुतम् ॥ १५७ ॥

मुष्टिना ङ्गुष्ठनाळेन न्यसेन्मध्ये शिखं मनुम् ।
नाङ्कारेण समायोज्य बलाय कवचाय हुम् ॥ १५८ ॥

तेन कण्ठादि कट्यन्तं पाणिभ्यां वर्मयत्तनुम् ।
वीर्यायास्त्राय फडिति रांकारेणानुबध्य तु ॥ १५९ ॥

शब्दयेदं सयोस्तेन तर्जन्याङ्गुष्ठ युक्तया ।
दैत्यदानवरक्षांसि भीषयन्नस्त्र तेजसा ॥ १६० ॥

यं समायोज्य तेजसे नेत्राभ्यां वौषडित्यदः ।
निदध्याद्युगपन्मध्यं तर्जनीभ्यां दृशोर्द्वयोः ॥ १६१ ॥

तेजसे उदरायेति पदाभ्यां नमसापि च ।
णां समायोज्य तन्नाभ्या मङ्गुळीभिर्निवेशयेत् ॥ १६२ ॥

पृष्ठबाहूरू जान्वङ्घ्रि युगळेषु यथाक्रमम् ।
तेजसे इति संयुक्तैः नमोन्तैश्च स्वनामभिः ॥ १६३ ॥

यंकारेणच संयोज्य तत्र तत्र निवेशयेत् ।

हृद्यागकालविकल्पः—

अस्मिन्वावसरे कुर्यात् आहूते वासने हरौ ॥ १६४ ॥
हृद्यागं कॢप्तसंभारः स्वच्छन्देन यथा विधि ।

पात्रकल्पनम्—

ततस्तोयं समुत्पूर्य महत्या सिच्य भाजने ॥ १६५ ॥

मूलमन्त्रेण संशोष्य दग्ध्वा प्लाव्यामृताम्भसा ।
स्थापयेत् दक्षिणे पार्श्वे सिक्त्वा सुरभिमुद्रया ॥ १६६ ॥

ततस्संभारमखिलं पूजार्थ मुपकल्पितम् ।
शोषणादिभि रालोक्य नीत्वा राधनयोग्यताम् ॥ १६७ ॥

स्थापयित्वाग्रतः सर्वं सर्वतः संस्मरन् हरिम् ।
हस्तप्रक्षालनार्थं च जलं संस्थाप्य वामतः ॥ १६८ ॥

प्रोक्षणार्घ्यार्थ मुचितं पात्रं प्रक्षाल्य वारिणा ।
शुचिना पूर्यं तोयेन निर्मलेन सुगन्धिना ॥ १६९ ॥

तत्तीर्थरूपिणं तत्र ध्यात्वैवं मनसा हरिम् ।
अभ्यर्च्य गन्धपुष्पाद्यैः सप्तकृत्वोऽभिमन्त्र्य तम् ॥ १७० ॥

पुनश्च तस्मिन्नपरं पुष्पमेकं समन्त्रकम् ।
दत्वा तदेव च ततः समुद्धृत्य बहिर्हरेत् ॥ १७१ ॥

ओ मर्घ्यं कल्पयिष्यामी त्युक्त्वा चार्घ्यं प्रकल्प्य तु ।
तज्जलेनैव संभारम् आत्मानमवनिञ्च ताम् ॥ १७२ ॥

संप्रोक्ष्य स्वेन मन्त्रेण योगपीठस्य पार्श्वतः ।
तमभ्यर्घ्य मवस्थाप्य रक्षां कृत्वास्त्र तेजसा ॥ १८३ ॥

ततश्चत्वारि पात्राणि सौवर्णादीनि शक्तितः ।
प्रक्षाल्यास्त्रेण विधिवत् स्थापयेत् पुरतो हरेः ॥ १७४ ॥

मृष्टोपलिप्ते भूभागे संस्कृते शोषणादिभिः ।
आस्तीर्यास्तरणं धौतं तस्योपरि समाहितः ॥ १७५ ॥

अर्घ्यादिपात्राणां दिग्विभागः—

अथोमर्घ्यं कल्पयामीत्युक्त्वा वायुपदे न्यसेत् ।
कलशं तद्वदैशान्यां न्यसे दाचमनार्थकम् ॥ १७६ ॥

स्नानार्थ मग्निभागे तु पाद्यार्थं नैर्ऋते तथा ।
तानि तोयैः समुत्पूर्य शुचिभिश्च सुगन्धिभिः ॥ १७७ ॥

अर्घ्यादीनां गन्धद्रव्याणि—

गन्धपुष्पाक्षतकुशान् अर्घ्ये पाद्ये सनद्मकम् ।
श्यामाकं विष्णुपर्णीं च दूर्वां चाचमनाम्भसि ॥ २७८ ॥

एला लवङ्ग तक्कोल लामज्जकुसुमान्यपि ।
सिद्धार्थकादीन् स्नानीये पृथक् पृथगनुक्रमात् ॥ १७९ ॥

स्वमन्त्रेण विनिक्षिप्य तदलाभे हरिप्रियाम् ।
तुलसीमेव निक्षिप्य रक्षां कृत्वा ततः परम् ॥ १८० ॥

आसनं कल्पयेदेवं आधारादि यथाक्रमम् ।

आधारशक्त्यादि योगपीठ परिकल्पनम्—

आधारशक्तिं प्रकृतिं कूर्मं शेषं धराधरम् ॥ १८१ ॥

पृथिवीं चोपर्युपरि न्यस्य मन्त्रैः प्रणम्य च ।
तत्र क्षीरार्णवं श्वेतं द्वीपं श्रीरङ्गमेव च ॥ १८२ ॥

परमव्योम वैकुण्ठं वैष्णवं धाम शाश्वतम् ।
एतेष्वन्यतमं देशं ध्यात्वा देवगृहं स्वकम् ॥ १८३ ॥

तेन तेन च मन्त्रेण स्मृत्वाभ्यर्च्य प्रणम्य च ।
तत्रानन्तात्मकं दिव्यम् आस्तीर्यास्तरणं शुभम् ॥ १८४ ॥

तत्र वह्न्यादिकोणेषु योगपीठस्य पादकान् ।
धर्मं ज्ञानं च वैराग्यम् ऐश्वर्यं च यथा क्रमम् ॥ १८५ ॥

विन्यस्य मन्त्रैः तदनु दिक्षु पूर्वादिषु क्रमात् ।
ऋगादीन् चतुरो वेदान् हयवक्त्रान् स्वमौलिभिः ॥ १८६ ॥

दधतो योगपीठम् तम् उत्क्षिप्तैः स्वभुजैरपि ।
कृतादींश्च युगां स्तद्वत् वृषवक्त्रानवस्थितान् ॥ १८७ ॥

ततो गात्राणि पीठस्य प्रागादिषु निवेशयेत् ।
अधर्मा ज्ञाना वैराग्यानैश्वर्याह्वान् देवताः ॥ १८८ ॥

प्रणम्याभ्यर्च्य तन्मन्त्रैः ततस्सत्वं रजस्तमः ।
तन्मध्ये फलकाः कुर्यात् मन्त्रैः स्वैः प्रागुपक्रमात् ॥ १८९ ॥

एवं सदात्मकं पीठमनन्तात्मक मुज्वलम् ।
सर्वकार्योन्मुखं स्मृत्वा तन्मन्त्रेणाभिपूज्य च ॥ १९० ॥

तस्योपरि महापद्मं सहस्रदल संवृतम् ।
उद्यद्भास्कर बिम्बाभं शुभकेस रकर्णिकम् ॥ १९१ ॥

तन्मन्त्रेणैव विन्यस्य समभ्यर्च्य प्रणम्य च ।
दलेषु मण्डलं वह्नेः केसरे बिन्दुमण्डलम् ॥ १९२ ॥

कर्णिकायां रवेर्बिम्बं स्वमन्त्रेणैव योजयेत् ।

व शक्ति ध्या न म्—

दलेष्वष्टसु तस्याथ पूर्वाद्येषु यथाक्रमम् ॥ १९३ ॥

विमलोत्कर्षिणी ज्ञाना क्रियायोगाः पृथक् पृथक् ।
प्रह्वीं च सत्याम् ईशानां ध्यात्वा मन्त्रै र्यथाक्रमम् ॥ १९४ ॥

स्मरेदग्रे स्वमन्त्रेण कर्णिकायामनुग्रहाम् ।
शक्तीर्नवैताः परितो वीक्षमाणा हरेर्मुखम् ॥ १९५ ॥

करेणैकेन दधतीः चामराणि स्वलङ्कृताः ।
अन्येन च नमस्यन्तीः स्वशिरो निहितेन च ॥ १९६ ॥

चिन्तयित्वैव मेताश्च गन्धाद्यैरभिपूज्य च ।
योगपीठमिदं सर्वं जगत्प्रकृति निर्मितम् ॥ १९७ ॥

आधारशक्त्याद्यखिलं देवतामयमद्भुतम् ।
प्रणम्याभ्यर्च्य गन्धाद्यैः स्वमन्त्रेण ततः परम् ॥ १९८ ॥

अ न न्ता स न ध्या न म्—

तत्पद्मकर्णिकामध्ये कुण्डलीकृतविग्रहम् ।
राजताद्रि प्रतीकाशं सहस्रेन्दुसमप्रभम् ॥ १९९ ॥

कुन्दमालाङ्कमुन्निद्र पद्मपत्रारुणे क्षणम् ।
शैत्य सौरभ्य सौगन्ध्य मार्दवादि गुणाकरम् ॥ २०० ॥

फणामणि सहस्रांशु निचयेन विसर्पता ।
रञ्जितं चन्दनेनेव रक्तेनाति सुगन्धिना ॥ २०१ ॥

नारायणाङ्ग सौगन्ध्य वर्धित स्वाङ्गसौरभम् ।
फणासहस्रं वियति वितानामेव सर्वतः ॥ २०२ ॥

वितत्यासीनमानन्द निर्भरोद्भ्रान्तलोचनम् ।
अचिन्त्यानन्त विज्ञान बलैक निलयं विभुम् ॥ २०३ ॥

राजाधिराजं नागाना मनन्तं कान्तविग्रहम् ।
ध्यात्वा प्रणम्य चाभ्यर्च्य गन्धपुष्पादिभिः शुभैः ॥ २०४ ॥

इतर परिवाराणां पीठकल्पनम्—

ततः प्रागुत्तरे देशे योगपीठस्य पार्श्वतः ।
न्यसेत् रत्नमयं पीठं रुचिरं शेषभोजिनः ॥ २०५ ॥

पश्चिमायामपि दिशि पीठं शेषाय निक्षिपेत् ।
पुरतो वैनतेयस्य निदध्यात् पीठमासनम् ॥ २०६ ॥

पुरतः पार्श्वतः पश्चादपि पद्मानि सर्वतः ।
अन्येषां परिवाराणाम् आसनानि प्रकल्प्य च ॥ २०७ ॥

पश्चिमोत्तरदिग्भागे योगपीठ समीपतः ।
आसीनान् मनसा ध्यात्वा स्वगुरून् तद्गुरूनपि ॥ २०८ ॥

उपसृत्योपसद्यैतान् अभिवाद्य प्रसाद्य च ।
यथा यथं स्वमन्त्राभ्यां प्रणम्याभ्यर्च्य सादरम् ॥ २०९ ॥

तेभ्यो विज्ञापयेदेवं प्रयतः स्वचिकीर्षितम् ।

प्रार्थना मन्त्रः—

गुरवस्तदीयगुरवो दिशन्तु मम साध्वनुग्रहम् ॥ २१० ॥

युष्मदुपजानित शक्तिमतिरहं हरिमर्चयामि गतभीः प्रसीदत

यागभूमौ भगवदावाहनम्—

इति विज्ञाप्य तैश्चाथ दत्तानुज्ञो गतव्यथः ॥ २११ ॥

यागभूमिं संप्रकीर्य साक्षतैः कुसुमोत्करैः ।
ततो गुग्गुलकर्पूर चन्दनागरु जन्मभिः ॥ २१२ ॥

अधिवास्य शुभैर्धूपैः भूयो भूयश्च सर्वतः ।
ततोभिमुखयन्देवम् अवतीर्णं स्वके गृहे ॥ २१३ ॥

सहिष्णुमपराधानाम् अनन्तासह्यरूपिणाम् ।
व्योम्नश्च तस्माद्वैकुण्ठात् अवतीर्यात्मनो ग्रतः ॥ २१४ ॥

आसीनमादिपुरुषं श्रिया भूम्या च संयुतं ।
शेषशेषाशनाद्यैश्च सूरिभिः सचिवैरपि ॥ २१५ ॥

स्वयवै कृपया सम्यक् स्वदृष्टिपथमागतम् ।
प्रणम्य दण्डवद्भूम्यां अष्टाङ्गं हृष्टमानसः ॥ २१६ ॥

मूर्ध्न्याधायाञ्जलिं तिष्ठन् सस्नेहादर साध्वसम् ।
आवाहनामिति प्रोक्तं याचेदात्मावलोकनम् ॥ २१७ ॥

निवेदयेच्च भूयोपि प्रणम्यात्म मनोरथम् ।

भगवत् प्रार्थना—

इज्याकालस्तृतीयोयं अह्नोंश स्समुपागतः ॥ २१८ ॥

संभृताश्चैव संभाराः कल्पितान्यासनानि च ।
स्नानाद्यर्थानि देवेश तवेच्छा वर्तते यदि ॥ २१९ ॥

अवलोकन दानेन तत्सर्वं सफलं कुरु ।

प्रथम मन्त्रासनम्—

तदर्थं सह देवीभ्यां सानुगैः सचिवैः सह ॥ २२० ॥

मदनुग्रहाय कृपया ह्यत्रागन्तुं त्वमर्हसि ।
इति विज्ञापिता यांथ ददते चावलोकनम् ॥ २२१ ॥

पादुकाग्रेय प्रदायाग्रे प्रणम्य च पुनः पुनः ।
हरिवाहनमात्मानं मन्यमानः खगाधिपम् ॥ २२२ ॥

र्ध्न्याधाय च तं देवं प्रथमासनमानयेत् ।
आगताय निवेद्याथ पूर्वकल्पितमासनम् ॥ २२३ ॥

अध्यास्वैनामिहास्वेति याचित्वाभि प्रणम्य च ।
आसीनाय सुसंहृष्टः सपत्नीकाय वेधसे ॥ २२४ ॥

स्वागतं विनिवेद्याथ सान्निध्यं प्रार्थ्य सादरम् ।
ततस्सपुत्रभार्याकं सान्वयं सपरिग्रहं ॥ २२५ ॥

सादरं विष्णवे तस्मै स्वमात्मानं निवेदयेत् ।
आसीने पुरुषे तस्मिन् शेषादिषु च सर्वतः ॥ २२६ ॥

आसनेषु यथाभागम् आसीनेषु हरेर्दशा ।
ततः कृताभ्यनुज्ञानो हरिणा सूरिभिश्च तैः ॥ २२७ ॥

हृद्यागः—

हृद्यागं कर्तुमुद्युक्तः कुर्यादेव मतन्द्रितः ।
हृत्पुण्डरीकमध्ये तु योगपीठं यथा बहिः ॥ २२८ ॥

कुर्यादाधारशक्त्यादि नागराजान्तमुज्वलम् ।
आसोनं तस्य पीठस्य पार्श्वतः पृष्ठतः स्वयम् ॥ २२९ ॥

ध्यायेन्नारायणं देवं तस्य पीठस्य चोपरि ।

भगवद्रूपध्यानम्—

भोगिभोगासनासीनं श्रिया भूम्या च संयुतम् ॥ २३० ॥

वामोरूपरि विन्यस्त दक्षिणाङ्घ्रि सरोरुहम् ।
प्रसार्याधाय वामाङ्घ्रि पादपीठाम्बुजान्तरे ॥ २३१ ॥

प्रसार्य दक्षिणं बाहुं न्यस्य दक्षिण जानुनि ।
नागभोगोपरि न्यस्त वामबाहु र्व्यपाश्रयम् ॥ २३२ ॥

अपरेणापि करयोः युगले नोर्ध्व वर्तिना ।
उन्नालकमलाभोग धृतशङ्ख सुदर्शनम् ॥ २३३ ॥

प्रसारित कराम्भोज धृत लीला सरोरुहम् ।
प्रणतावेक्षणायेव दव नम्र मिवाग्रतः ॥ २३४ ॥

दिव्यमाल्याम्बर धरम् दिव्यगन्धानुलेपनम् ।
गाम्भीर्यौदार्य चातुर्य माधुर्यादि गुणान्वितम् ॥ २३५ ॥

स्मेरारविन्दवदनं चार्वायत नतभ्रुवम् ।
सुकपोलं सुविस्तीर्ण ललाट तटशोभितम् ॥ २३६ ॥

तुङ्गघोणान्त विलसत् सुस्मिताधर विद्रुमम् ।
विलम्बि कर्ण पाशान्त स्फुरन्मकर कुण्डलम् ॥ २३७ ॥

आपीनानिन्द्य मधुर विलसत्कम्बु कन्धरम् ।
तुङ्गकान्तांस पर्यन्त विलम्ब्यानील कुन्तलम् ॥ २३८ ॥

बाहुभिः परिघाकारैः सर्वभूषण भूषितैः ।
शोभितं रत्नखचितैः सागरैरिव मन्दरम् ॥ २३९ ॥

श्रीवत्सकौस्तुभ भृता विपुलेन निजोरसा ।
बिभ्रतं वैजयन्तीं स्वां स्रजम् साक्षादिव श्रियम् ।। २४० ।।

तनुवृत्त निमग्नांस नाभि मुद्रोपशोभितम् ।
त्रिवली वलितोद्भासि तनुमध्योदर श्रियम् ।। २४१ ।।

व्यालम्बि पीतवसनं चार्वञ्चित पदाम्बुजम् ।
किरीट हार केयूर कटकाद्यैः स्वभूषणैः ।। २४२ ।।

भूषितं भूषणैश्चान्यैः स्वरत्नैरिव सागरम् ।
शङ्ख चक्र गदा खड्ग शार्ङ्गाद्यायुध सञ्चयैः ।। २४३ ।।

वृतं वह्निभिरुद्भूतैः और्वैरिव महार्णवम् ।

श्री देवी ध्यानम्—

एवमेव स्वमन्त्रेण ध्याये द्दक्षिणतः श्रियम् ।। २४४ ।।

ईश्वरीं सर्वभूतानां जननीं सर्वदेहिनां ।
चारुस्मितां चारुदतीं चारुनेत्रां नतभ्रुवम् ।। २४५ ।।

सुकपोलां सुकर्णान्त न्यस्त मौक्तिक कुण्डलाम् ।
सुकेशीं चारुबिम्बोष्ठीं रक्त तुङ्ग नखस्तनीम् ।। २४६ ।।

अलकैरति नीलाभैः अलङ्कृत मुखाम्बुजां ।
लसत्कनक शङ्खाभ पीन सुन्दर कन्धराम् ।। २४७ ।।

निष्ककण्ठीं स्तनालम्बि मुक्ताहार विराजिताम् ।
नीलकुन्तल मध्यस्थ माणिक्य मकुटो ज्वलाम् ।। २४८ ।।

शुक्ल माल्याम्बरधरां तप्त हाटक वर्णिनीम् ।
अनन्य सुलभै स्तैस्तैः गुणैः स्वाभाविकैर्निजैः ॥ २४९ ॥

अनुरूपा नवद्याङ्गीं हरेर्नित्य सहायिनीम् ।
एतामेव मनुस्मृत्य स्वमन्त्रेण प्रणम्य च ॥ २५० ॥

भू दे वी ध्या न म्—

चिन्तयेत्सव्यतश्चापि भुवं भगवतः प्रियाम् ।
स्वमन्त्रेण गुणै स्तैस्तैः शुभैः श्यामामिव श्रियम् ॥ २५१ ॥

हरेरिवास्या ध्येयानि भूषणान्यम्बराणि च ।

नी ला दे वी ध्या न म्—

स्थितां पुरस्तात् देवस्य संस्मरेदपरां प्रियाम् ॥ २५२ ॥

स्वमन्त्रेणानवद्याङ्गीम् नीलकुञ्चित कुन्तलाम् ।
बाला मबालेन्दु मुखीम् नीळेति प्रवदन्ति याम् ॥ २५३ ॥

पा द सं वा हि नी ध्या न म्—

पादसंबाहिनी श्चान्याः शुभाः श्रिय इवापराः ।
असङ्ख्या दिव्यवपुषो दिव्याभरण भूषिताः ॥ २५४ ॥

पुष्प भाजन ताम्बूल करण्ड मुकुरादिभिः ।
परिचरोपकरणैः स्वस्व कर्मोचितैर्युताः ॥ २५५ ॥

ध्यात्वैवमेताः स्वै मन्त्रैः पुरस्तात् प्रमुखे हरेः ।

दिव्यभूषण ध्यानम्—

चतुर्भुजं चतुर्वक्त्रं सुवेषं चारु लोचनम् ॥ २५६ ॥

सर्वावयव संपूर्णं सर्वावयव सुन्दरम् ।
हस्तद्वयेन चोर्ध्वेन मौळिना स्वेन चोच्चकैः ॥ २५७ ॥

दधतं देवदेवस्य किरीटं सर्वतोमुखम् ।
करद्वयेन चान्येन कृताञ्जलिपुटं हृदि ॥ २५८ ॥

ध्यात्वा किरीटाधिपतिं समन्त्रं दिव्य विग्रहम् ।
आपीडात्मान मप्येवं चिन्तयेत् पुरतो हरेः ॥ २५९ ॥

बिभ्रतं स्वेन मन्त्रेण देवापीडं स्व मौळिना ।
पार्श्वयो रुभयो र्ध्यायेत् कुण्डले मकरात्मके ॥ २६० ॥

स्वमन्त्रेण स्व मौलिस्थ देव श्रवण भूषणे ।
पञ्चवर्णा मपि पुरो वनमालां गदाभृतः ॥ २६१ ॥

वैजयन्तीं मृदुतनुं श्रियं मूर्तिमती मिव ।
यां वदन्ति पुराणज्ञा भूतमालां मनीषिणः ॥ २६२ ॥

आधारभूतां भूतानां तां स्वमन्त्रेण संस्मरेत् ।
तुलसी मपि तत्पार्श्वे सर्व सौगन्ध्य निर्भराम् ॥ २६३ ॥

श्यामां कमलपत्राक्षीं गोविन्द चरण प्रियाम् ।
प्रियां श्रियमिवानन्यां हरे र्नित्य विभूषणाम् ॥ २६४ ॥

प्रणम्यात्मीय मन्त्रेण ध्यायेत् प्रमुखतो हरेः ।
प्रधान तत्वस्याधारं स्वमन्त्रेणाति सुन्दरम् ॥ २६५ ॥

श्रीवत्सं पुरतो विष्णोः हेमप्रभमनुस्मरेत् ।
भास्वरं दिव्यवपुष मास्पदं चाखिलात्मनाम् ॥ २६६ ॥

कौस्तुभं पुरतो विष्णोः मन्त्रेण स्वेन संस्मरेत् ।
हारं चोदर बन्धं च काञ्चीं पीते च वाससी ॥ २६७ ॥

नूपुरादीनि चान्यानि भूषणान्यखिलानि च ।
तत्तदङ्ग समुत्थानि तेजांसीव परात्मनः ॥ २६८ ॥

सुरूपाणि सुगन्धीनि सुकुमाराकृतीनि च ।
मनोनयन हारीणि देवस्यापि निजैर्गुणैः ॥ २६९ ॥

स्वैरेव धार्यमाणानि रूपैर्बहुविधै श्शुभैः ।
यथारूपं यथास्थानं यथावर्णं यथाक्रमम् ॥ २७० ॥

प्रणम्य चिन्तयेद्भक्त्या स्वमन्त्रैः परितो हरेः ।

सुदर्शन ध्यानम्—

देवस्य दक्षिणे पार्श्वे हेतिराजं सुदर्शनम् ॥ २७१ ॥

चलस्वरूप मत्युग्रम् मनस्तत्वाधि दैवतम् ।
द्विभुजं त्रिदशारिघ्नं ज्वलज्वलन सन्निभम् ॥ २७२ ॥

रक्तमाल्याम्बरधरं भीमसुन्दर विग्रहम् ।
दधतं भगवच्चक्रं नित्यं वै स्वेन मौळिना ॥ २७३ ॥

ध्यात्वा स्वकीय मन्त्रेण शिरसा भिप्रणम्य च ।

नन्दक ध्यानम्—

असि रत्नं च तत्रैव नन्दकं नन्दकं हरेः ॥ २७४ ॥

महाप्रमाणं विपुलं ज्ञानतत्वाधि दैवतम् ।
दिव्येन स्वेन वपुषा सर्वावयव शोभिना ॥ २७५ ॥

बिभ्रतं मौळिना खड्गं मन्त्रेण स्वेन संस्मरेत् ।
अविद्याधारमप्यत्र चिन्तयेद्भर्मं पूर्ववत् ॥ २७६ ॥

असिरत्न महाकोशं मन्त्रेणोद्धृत विग्रहम् ।
शैत्य सौरभ्य सौन्दर्य मार्दवौज्वल्य संयुतम् ॥ २७७ ॥

लीलापद्मं स्वमन्त्रेण ध्यायेत् पुरुषविग्रहम् ।

पाञ्चजन्य ध्यानम—

वामतः पाञ्चजन्यं च शङ्खराजं मनोहरम् ॥ २७८ ॥

शरच्छशधराकारम् बृहत्कुक्षि समन्वितम् ।
ह्रस्वदेहं महाराव खण्डिता शेष दानवम् ॥ २७९ ॥

पुल्लपद्म सदृक्षाक्ष पाणिपादाननोज्वलम् ।
दधतं शिरसा शङ्खं महंकाराधिदैवतम् ॥ २८० ॥

चिन्तयित्वा स्वमन्त्रेणशिरसाभि प्रणम्यच ।

कौमोदकी ध्यानम्—

ततः कौमोदकीं चापि दिव्यरूप समन्विताम् ॥ २८१ ॥

दधतं शिरसा स्वेन गदां भगवतः प्रियाम् ।
आधारभूतां मुनयो बुद्धिं तत्त्वस्य यां विदुः ॥ २८२ ॥

ध्यात्वा प्रणम्य मन्त्रेण वामतो हेमभूषिताम् ।

शार्ङ्ग ध्यानम्—

ध्यायेत्ततः स्वमन्त्रेण शार्ङ्ग मायत विग्रहम् ॥ २८३ ॥

अहंकारस्येन्द्रियादे रधिदैवत माश्रयम् ।
शारै स्सर्वेन्द्रियाधारैः सर्वैः पुरुष विग्रहैः ॥ २८४ ॥

दधद्भिर्मौळिभिः स्वैः स्वैः स्वं स्वं रूपं विभूतिजम् ।
सुवृत्तं संवृतं मौर्व्या सख्येव प्रियया स्वया ॥ २८५ ॥

स्वाकृतिभ्यां च तूणीभ्यां प्रियाभ्यामिव संयुतम् ।
त्रिनतं पुरुषाकारं दधत् स्वाशिरसा धनुः ॥ २८६ ॥

हैमपट्टैर्बहुविधैः सुरत्नैः सर्वतो वृतम् ।

इतरायुधानां ध्यानम्—

अन्यान्यसङ्ख्यान्यच्छेद्यानि अमोघानि महान्त्यपि ॥ २८७ ॥

दिव्यपूरुषरूपाणि परितः सर्वतो हरेः ।
स्वाशिरो बिभृतानन्त स्व विभूति वपूंष्यपि ॥ २८८ ॥

स्वस्वरूपावसक्तानि स्वाङ्ग प्रत्यङ्ग वद्विभोः ।
एतान्यायुधजालानि स्वस्वमन्त्रै र्यथोदितम् ॥ २८९ ॥

सेनापति ध्यानम्—

अविदूरे थ देवस्य प्रागुदीच्यां वरासने ।
आसीनं नीलमेघाभं शङ्ख चक्र गदा धरम् ॥ २९० ॥

पीत कौशेय वसनं चारु पद्मदळेक्षणम् ।
ऊर्ध्व लक्षित तर्जन्या साज्ञया ससुरासुरान् ॥ २९१ ॥

शासतं सकलान् लोकान् ध्यायेत् सेनापतिं हरेः ।
तत्पार्श्वे तत्प्रियां देवीं ध्याये त्सूत्रवतीमपि ॥ २९२ ॥

कालप्रकृति पूर्वांश्च चतुर स्तच्चमूपतीन् ।
गजानन जयत्सेन हरिवक्त्रा ननुक्रमात् ॥ २९३ ॥

प्रणम्य भक्त्या मन्त्रैः स्वैः ततः पश्चिमतो हरेः ।

नागराज ध्यानम्—

नागराज मनन्तं च हल मुद्गर धारिणम् ॥ २९४ ॥

चतुर्भुजं सरोजाक्षं शशि कोटि सम प्रभम् ।
फणा सहस्र मौळ्याढ्यम् नील वाससमुज्वलम् ॥ २९५ ॥

हरि संस्पर्श जानन्द मन्दोद्भ्रान्त विलोचनम् ।
उपोपविष्टं वारुण्या कान्त्या चैवा नवद्यया ॥ २९६ ॥

वृतं स्वानुचरै र्नित्यैः अन्यैश्च भुजगेश्वरैः ।
वरकाञ्चन पीठस्थं ध्याये त्तन्मन्त्र पूर्वकम् ॥ २९७ ॥

वैनतेय ध्यानम्—

पुरतश्च सुखासीनं वैनतेयं वरासने ।
सुकीर्त्या रुद्रयाचैव सार्धं हृदि कृताञ्जलिम् ॥ २९८ ॥

शितश्यामळ तुण्डाग्रं वृत्त भीम विलोचनम् ।
देवालोकन हर्षोत्थ स्मित भिन्नोष्ठ संपुटम् ॥ २९९ ॥

लसत्कर्णान्त विन्यस्त नाग कुण्डल मण्डनम् ।
परि निक्षिप्त सुमुख कृत कर्णाव लम्बकम् ॥ ३०० ॥

पक्षाभ्यां पञ्चवर्णाभ्यां युतं हैममिवाचलम् ।
अन्यैश्चा नुचरैस्सार्धं ध्यायेत् पत्नरथेश्वरम् ॥ ३०१ ॥

तन्मन्त्रेण प्रणम्याथ प्रियं मित्रं परात्मनः ।

पादुका ध्यानम्—

देवस्य पुरतः पार्श्वे पादुके हेम भूषिते ॥ ३०२ ॥

दिव्य पूरुष रूपेण ध्यात्वा तन्मन्त्र पूर्वकम् ।
अशरण्याखिल जग च्छरण्ये शरणं व्रजेत् ॥ ३०३ ॥

द्वारपाल ध्यानम्—

तत श्चण्ड प्रचण्डौ द्वौ पूर्व द्वारस्य पार्श्वतः ।
शङ्ख चक्र गदा हस्तौ संज्ञा मुद्रौ महा बलौ ॥ ३०४ ॥

भूषितौ भूषणैः सर्वैः किरीटाद्यै र्महाधनैः ।
दक्षिण द्वार पार्श्वस्थौ तथा भद्र सुभद्रकौ ॥ ३०५ ॥

जयञ्च विजयञ्चैव पश्चिम द्वार पार्श्वयोः ।
धातारं च विधातारम् उत्तर द्वार पार्श्वयोः ॥ ३०६ ॥

तेषामधिपतींश्चैव तत्पतीं स्तत्पतीनपि ।
तत्तन्मन्त्रै स्सं प्रणम्य संपूज्याभि प्रसाद्य च ॥ ३०७ ॥

बहिर्गणाधीश ध्यानम्—

ततो बहिर्गणाधीशान् अष्टा वष्टसु दिक्ष्वपि ।
कुमुदं कुमुदाक्षं च पुण्डरीकं च वामनम् ॥ ३०८ ॥

शङ्कुकर्णं सर्वनेत्रं सुमुखं सुप्रतिष्ठितं ।
सवाहन परिवारान् सायुधान् सपरिच्छदान् ॥ ३०९ ॥

सर्वांश्चतुर्भुजानेतान् शङ्ख चक्र गदा धरान् ।
भूषितान् भूषणै र्दिव्यैः ध्याये न्मन्त्रैः पृथक् पृथक् ॥ ३१० ॥

नित्य ज्ञान क्रियैश्वर्यान् परं साम्यमुपागतान् ।
सर्वान् पारिषदान् ध्यायेत् मन्त्रैः स्वैः परितो हरेः ॥ ३११ ॥

एवं ध्यात्वा च तं देवं मानसै रतिमानुषैः ।
सांस्पर्शिकैश्च गन्धाद्यैः छत्राद्यै रौपचारिकैः ॥ ३१२ ॥

शुद्धै र्हविरपूपाद्यैः शुभै राभ्यवहारिकैः ।
उपचारै श्चतुः षष्टि सङ्ख्यै रावाहनादिभिः ॥ ३१३ ॥

अभ्यर्च्य देवं हृदये द्रव्यै र्भावमयैः शुभैः ।
पत्नी परिजनोपेतं प्रणम्याभि प्रसाद्य च ॥ ३१४ ॥

निवेद्य च बहिर्यागं एवं भक्त्या समाहितः ।

हृद्याग समाप्तिः—

निष्क्रम्य तस्मा द्धृदया दासीनः पुरतो हरेः ॥ ३१५ ॥

कृताञ्जलि पुट स्तस्मै निवेद्यात्म चिकीर्षितम् ।
अनुज्ञात श्च तेनापि देवीभ्यां सचिवैरपि ॥ ३१६ ॥

ततश्चण्ड प्रचण्डादीन् सगणान् सर्वदिक्ष्वपि ।
अभ्यर्च्य गन्ध पुष्पाद्यैः सादरं द्वारपालकान् ॥ ३१७ ॥

बहिर्यागे उपचाराः—

आरभेत बहिर्यागं एवं भोगक्रमं स्मरेत् ।
प्रदर्शनं प्रदानं च क्षामणं प्रीणनं तथा ॥ ३१८ ॥

आदौ मध्ये वसाने च प्रतिभोगं समाचरेत् ।
अवलोकय देवेद मित्यावेद्य स्व संज्ञया ॥ ३१९ ॥

प्राप्तं प्राप्तं क्रमाद्भोगं दर्शये दासनादिकम् ।
प्रदर्शित मिमं भोगं गृह्णीष्व भगवन्निति ॥ ३२० ॥

ब्रुवन् प्रणम्य प्रयतः प्रदद्यात् परमात्मने ।
अथा पराधा नखिलान् दत्त भोगा नुबन्धिनः ॥ ३२१ ॥

क्षमस्व देव देवेति क्षामयेत् प्रणमन् पुनः ।
देव पादौ स्व हस्ताभ्यां गृहीत्वा शिरसा नमन् ॥ ३२२ ॥

प्रीणये हृत्तभोगेन प्रीयतां भगवानिति ।
भोग दान विधावेवं सावधान स्सदा स्मरेत् ॥ ३२३ ॥

बहिर्यागारम्भः—

पूर्वं सङ्कल्पितादर्घ्यात् द्वितीया चषकादिना ।
आदाय साक्षतं तोयं पाणिभ्यां नासिका समम् ॥ ३२४ ॥

ऊर्ध्व मुत्क्षिप्य सभयः तिष्ठन्नवनताननः ।
गृह्णीष्व भगवन् पूजां मत्प्रयुक्तामिति ब्रुवन् ॥ ३२५ ॥

न्यसेद्दक्षिणतः किञ्चित् जलं देवस्य मूर्धनि ।
शेषं तच्चरणौ स्मृत्वा क्षिपेदर्घ्यप्रतिग्रहे ॥ ३२६ ॥

यौगपद्येन भोगाना मर्घ्य मर्पण मिष्यते ।
तच्चागतस्य देवस्य श्रमायासोपशान्तये ॥ ३२७ ॥

सर्व रत्न विचित्रञ्च हैमं पाद्य प्रतिग्रहम् ।
दत्वा सपुष्पं करयोः प्रसार्य युगलं स्वकम् ॥ ३२८ ॥

पादप्रक्षाळनम्—

याचेत शिरसा देवं स्पृशन् तच्चरणाम्बुजम् ।
अकृत्रिम प्रेमरस मधुरैः स्वकराम्बुजैः ॥ ३२९ ॥

शुद्धैः स्वभाव मधुरैः सुखस्पर्शैः सुगन्धिभिः ।
संवाह्यमानमनिशं शेष शेषाशनादिभिः ॥ ३३० ॥

असत्यस्याति नीचस्य भक्ति हीनस्य दुर्मतेः ।
ममापि करयोरद्य त्वयैव कृपया हरे ॥ ३३१ ॥

निधेहि चरण द्वन्द्वं त्वामस्मि शरणं गतः ।
अभ्यर्थितेन तेनैव दत्तं तद्दक्षिणं पदम् ॥ ३३२ ॥

पूर्वसङ्कल्पितात्पाद्यात् उद्धृतै र्जलजादिना ।
स्वयमेव शुभैस्तोयैः पाणिभ्यामवनेजयेत् ॥ ३३३ ॥

ततः प्रोतेन संमृज्य चन्दनेनो पलिप्य च ।
दत्त पुष्प चयं पादं नाग भोगे निवेशयेत् ॥ ३३४ ॥

एवं सव्यं च चरणम् अवनिज्या वमृज्य च ।
अनुलिप्या र्चयित्वा च यथा पूर्वं निवेशयेत् ॥ ३३५ ॥

ततः पुरस्तात् देवस्य हेम रत्न विचित्रितम् ।
निधायाचमनो च्छिष्ट प्रतिग्रहमनुत्तमम् ॥ ३३६ ॥

तत आचमनार्थं च हस्ते देवस्य दक्षिणे ।
पूर्वसङ्कल्पितं तोयं दद्याद् भक्त्या यथा पुरा ॥ ३३७ ॥

मधुपर्कोपचारः—

ततो दधि मधु न्यस्य सर्पिर्वा मध्वलाभतः ।
मधुपर्कं प्रकल्प्य त्रिः मधुपर्क इति ब्रुवन् ॥ ३३८ ॥

प्रदर्श्य पुरत स्तस्य प्रदद्या दक्षिणे करे ।
ततः प्रीतवाति प्रीत्या मधुपर्के परात्मनि ॥ ३३९ ॥

हस्तस्य क्षालनायाथ प्रदद्या दुष्णवार्यपि ।
दत्वा चाचमनीयाम्भः सुगन्धि शुचि निर्मलम् ॥ ३४० ॥

हस्तस्य मार्जनायाथ प्लोतं धौतं सुधूपितम् ।
सालंकाराञ्च गां दद्यात् सवत्सां तरुणीं शुभां ॥ ३४१ ॥

गन्धलेपोपचारः—

ततश्चन्दन कर्पूर कुङ्कुमागरुभिः कृतम् ॥
क्षोदं हिमजलैः सिक्तं दर्शयित्वा निवेद्य च ॥ ३४२ ॥

तेन देव वपु स्सर्व मनुलिंपेत् स्व पाणिना ।
ततो लक्ष्मीं भुवं चापि परिवारांश्च सर्वशः ॥ ३४३ ॥

अङ्ग रागै र्बहुविधैः अनुलिंपेत् सुगन्धिभिः ।

पुष्पमालोपचारः—

ततः पुष्पाणि देवस्य दत्वा पाणि सरोजयोः ॥ ३४४ ॥

गन्धवन्त्यनवद्यानि विविधानि बहूनि च ।
स्वोत्पादितानि स्व क्षेत्रात् उत्पन्नानि स्वपाणिना ॥ ३४५ ॥

तुलसी पद्म कल्हार चम्पकादीनि सादरम् ।
दामभिर्विविधैः चित्रैः घ्राण नेत्र मनोहरैः ॥ ३४६ ॥

शुद्धैः सुगन्धैः सुभगैः सुखस्पर्शैः सुकल्पितैः ।
अयातयामैः अम्लानैः अगतामोद वैभवैः ॥ ३४७ ॥

अनिषिद्धै रविच्छिन्नैः अपर्युषित पूतिभिः ।
तुलसी मल्लिका जाति चम्पकादि विनिर्मितैः ॥ ३४८ ॥

मौलिमा वेष्टय देवस्य दत्वा चोत्तंसक स्रजम् ।
कण्ठमाला बहुविधा दत्वा पादस्रजश्शुभाः ॥ ३४९ ॥

मुक्त पुष्प चयं चापि बहुरूपं समन्ततः ।
संप्रकीर्य स्वहस्ताभ्यां पादयोः पार्श्वत स्तथा ॥ ३५० ॥

उपर्यपि च देवस्य प्रकीर्य कुसुमोत्करम् ।
देव्योश्च परिवाराणां दत्वा पुष्पाणि देववत् ॥ ३५१ ॥

आदर्शं दर्शयित्वा ग्रे प्रणमे द्दण्डवत् क्षितौ ।

धूपोपचारः—

ततो गुग्गुलु कर्पूर चन्दनागरु भिः कृतम् ॥ ३५२ ॥

धूपं सौगन्ध मादाय देवाय विनिवेदयेत् ।
देव्यादि परिवारेभ्यो दत्वा धूपं च पूर्ववत् ॥ ३५३ ॥

दीपोपचारः—

ततः कर्पूर चूर्णाढ्य घृतार्द्र नव वर्तिजात् ।
ज्वलतो रुचिरा द्दीपात् उत्थितात् चतुरङ्गुळम् ॥ ३५४ ॥

सुगन्धि दृष्टि सुखदम् औष्ण्येन परिवर्जितम् ।
आलोकमात्रा मादाय स्वेन दक्षिण पाणिना ॥ ३५५ ॥

सदेवीकाय देवाय स्वमन्त्रेण निवेदयेत् ।

घण्टानादनम्—

घण्टानादसनाथौ द्वौ धूप दीपौ निवेदयेत् ॥ ३५६ ॥
तन्नाद संयुतावेतौ दुष्टसत्व निबर्हणौ ।
भगवत्प्रीति जनकौ शृण्वतां पाप नाशनौ ॥ ३५७ ॥

तत आचमनं दत्वा पूर्व संकल्पितैर्जलैः ।

ताम्बूलोपचारः—

शुभैः कर्पूरजै स्तैलैः सिक्तं कुसुम वासितम् ॥ ३५८ ॥
प्रभूतं क्रमुकं दद्यात् श्वेत ताम्बूल संमितम् ।
देवाय देवी युक्ताय सानुयात्राय सादरम् ॥ ३५९ ॥

स्नानासनोपचारः—

ततः प्रणम्य स्थित्वा च मूर्ध्न्या धाया ञ्जलिं स्थितः ।
स्नानासनं ससंभार मेवं संस्मारये द्धरिम् ॥ ३६० ॥

प्रार्थनामन्त्रः—

स्नान काल स्त्वयं प्राप्तः तवेच्छा वर्तते यदि ।
अभ्यञ्जयित्वा देवेश सुस्नानं कर्तुमर्हसि ॥ ३६१ ॥

स्फुटीकृतं मया देव इदं स्नानपरे त्वयि ।
स पाद पीठं परम मिदं स्नानासनं महत् ॥ ३६२ ॥

आसादयाशु स्नानार्थं मदनुग्रह काम्यया ।
इति विज्ञाप्य तं देवं तेन चाप्यनुमोदितः ॥ ३६३ ॥

आदाय पादुके तस्मै स्नानासन मथानयेत् ।
तत्रा सीनाय देवाय दत्वार्घ्यं पूर्ववन्मुदा ॥ ३६४ ॥

पूर्वभुक्तानि माल्यानि वस्त्राण्या भरणानि च ।
अपनीय ततः स्नान शाटीं दत्वा यथोचिताम् ॥ ३६५ ॥

पत्नीभ्या मपि चैवैतत् कृत्वा सर्वं पृथक् पृथक् ।
पाद्य माचमनं दत्वा पादपीठं च सुस्थिरम् ॥ ३६६ ॥

दन्त काष्ठ द्वयं दत्वा दन्त पङ्क्त्यो र्द्वयोरपि ।
जिह्वा निर्लेहन पटं दद्यात् स्वर्णादि निर्मितम् ॥ ३६७ ॥

आस्य शोधन तोयं च मुखप्रक्षाळनं तथा ।
तत आचमनीयाम्भः आदर्शं निर्मलं तथा ॥ ३६८ ॥

हस्त प्रक्षाळनं तोयं दत्वा मात्रां प्रदर्श्य च ।
सुगन्धिभिः सुरूपैश्च कल्पितां शालि तण्डुलैः ॥ ३६९ ॥

प्रहृष्ट परिचर्याख्यां सर्व भोग प्रपूरणीम् ।
क्रमुकं च स ताम्बूलं यथापूर्वं निवेद्य च ॥ ३७० ॥

अभ्यङ्गं गन्ध तैलेन सुगन्ध्युद्वर्तनं शुभम् ।
बहुभि श्चामराद्यै श्च वीजनं गात्र मर्दनम् ॥ ३७१ ॥

तैल शोधन चूर्णानि गन्धा मलक वारि च ।
केशप्रक्षाळनं तोयं सुगन्धि च सुनिर्मलम् ॥ ३७२ ॥

लोध्र कल्केय पिण्याकं कचोरं करकं तथा ।
प्रियङ्गु संयुतं तोयं निर्मलं तगराम्बुच ॥ ३७३ ॥

सिद्धार्थक जलं चैव सुगन्धि सलिलं नवम् ।
सर्वौषधि जलं सर्व रत्न वारि सुगन्धि च ॥ ३७४ ॥

शुद्धतोयं च दत्वैषा मन्तरे चान्तरे जलम् ।
दत्वा देवस्य शिरसि केशान् संवेष्टय वाससा ॥ ३७५ ॥

तत श्शुद्धैः माषपिष्टैः चूर्णैश्च विविधै श्शुभैः ।
देहं संशोध्य देवस्य जलैः प्रक्षाळ्य निर्मलैः ॥ ३७६ ॥

स्नानशाटीं विसृज्यान्य द्वस्त्रं दद्यात् सुधूपितम् ।
प्रदद्यात् शुद्धतोयं तु स्नानासन विशुद्धये ॥ ३७७ ॥

अभिषेकोपचारः—

शोधिते च तत स्तोयैः स्वास्तृते धौतवाससा ।
आसने च तत स्तस्मिन् आसीने परमात्मनि ॥ ३७८ ॥

उपवीतो त्तरीये च जलं चाचमनीयकम् ।
गन्धं पुष्पं च धूपं च दीपं चाचमनं तथा ॥ ३७९ ॥

पवित्रं च शुभं कौशं करयो रुभयो रपि ।
स शङ्ख तूर्य निर्घोष मृग्यजु स्साम निस्वनम् ॥ ३७० ॥

स नृत्त गीतं वाद्यं च सर्व मङ्गळ संयुतम् ।
सहस्र रन्ध्र संयुक्त हेम पद्म विनिस्सृतैः ॥ ३८१ ॥

जलैस्सुगन्धिभिः शुद्धैः देव मूर्ध्न्यभिषेचनम् ।
कृत्वा प्रणम्य देवेशं पृष्ट्वा सुस्नान मादरात् ॥ ३८२ ॥

नीराजनोपचारः—

ततो नीराजनं कृत्वा देवं भक्ति समन्वितः ।
लोध्रादि द्रव्य वारिभ्यः द्वादशभ्यः पृथक् पृथक् ॥ ३८२३ ॥

किञ्चित् किञ्चित् समादाय तत्तत्स्नाना वसानतः ।
सुसंजातैः जलैः पूर्णं कलशं हेम निर्मितम् ॥ २८४ ॥

स दूर्वाश्वत्थ पत्रैश्च शुभै रपिहिताननम् ।
उपर्यारूढ सौवर्ण चतुर्दिग्दीप पात्रकम् ॥ ३८५ ॥

भ्रामयित्वो परि हरेः त्रि स्समन्त्रं प्रदक्षिणम् ।
उपदीपैः परिवृतं शङ्खतूर्यो पनादितम् ॥ ३८६ ॥

बहिर्निर्यातयेदेष नीराजन विधिक्रमः ।
ततः पद्मसमाकार कलशी नाळ निःसृतैः ॥ ३८७ ॥

शुद्धैः सुगन्धिभि स्तोयैः देवं भूयोभिषिच्य च ।
दत्वा चमन मव्यग्रः केशान् संमृज्य वाससा ॥ ३८८ ॥

देहवारि हरं चापि प्लोतं दत्वा सुधूपितम् ।
स्नान शाटी मथावृत्य क्षौमं दत्वा सुधूपितम् ॥ ३८९ ॥

केशाधारं शुभं क्षौमम् आस्तीर्या सद्रयो परि ।
केशान् प्रकीर्याधिवास्य धूपैः संस्कृत्य कङ्कतैः ॥ ३९० ॥

बध्वा लंकृत्य रुचिरैः दामभिश्च सुगन्धिभिः ।

अ लं का रा स नो प चा रः—

अलंकारासनं चास्य दर्शयित्वा प्रसाद्य च ॥ ३९१ ॥

दत्वा तु पादुका द्वन्द्वं तत्र देवं समानयेत् ।
तत्वा र्घ्यपाद्या चमन गन्ध संमर्दना नि च ॥ ३९२ ॥

दत्वा तु ताळवृन्ताद्यैः वीजयित्वा सचामरैः ।
धूपितं पीत वसनं भूषणान्यखिलानिच ॥ ३९३ ॥

उपवीतो त्तरीये च दत्वा स्याचमनं ततः ।
गन्धं बहुविधं रम्यं पुष्पाणि सुरभीणि च ॥ ३९४ ॥

स्रजश्च विविधा रम्याः सुगन्धि सुखदं दृशोः ।
अञ्जनं दर्पणं धौतं धूपं चाघ्राण सौख्यदम् ॥ ३९५ ॥

दीपमाचमनं चापि यथा पूर्वं निवेदयेत् ।
दर्शयित्वा ततो स्त्राणि चक्रादीनि पृथक् पृथक् ॥ ३९६ ॥

स्तोत्रैः श्रुतिसुखैः स्तुत्वा दत्वा पादुकयो र्युगम्
स्थापयित्वा ग्रत श्चोच्चैः ध्वजं गरुडलक्षणम् ॥ ३९७ ॥

छत्रं पार्वण चन्द्राभं मुक्ता दाम विराजितम् ।
हैम दण्डेच विमले चामरे चारु रूपिणी ॥ ३९८ ॥

प्रदर्श्य रथ मातङ्ग तुरगांश्च सलक्षणान् ।
शयना सन यानानि शङ्खांश्चामन्द्रनिस्स्वनान् ॥ ३९९ ॥

भेरीश्च पटुनिध्वानाः सकांस्य मधुर स्वनाः ।
मद्दळानि च रम्याणि गम्भीर निनदान्यपि ॥ ४०० ॥

हैमीश्च काहळी र्दिव्याः सुस्वनाः श्रोत्र तर्पणाः ।
गीतानि श्रुतिहारीणि नृत्तं नेत्र मनोहरम् ॥ ४०१ ॥

ढक्कादि विविधं वाद्यं शुभ ताळ समन्वितम् ।
प्रदर्श्य देवदेवस्य प्रीणनाय पृथक् पृथक् ॥ ४०२ ॥

वित्त मात्रां सुवर्णाढ्यां दत्वा भोग प्रपूरणीम् ।

पुष्पाञ्जलिप्रदानोपचारः—

मूल मन्त्रेण तदनु तद्वर्णैश्च पृथक् पृथक् ॥ ४०३ ॥

पञ्चभि श्चौपनिषदैः वाराहाद्यै स्तथापरैः ।
अन्यैश्च वैष्णवै र्मन्त्रैः प्राप्तै र्गुरु सकाशतः ॥ ४०४ ॥

पौरुषेणापि सूक्तेन प्रत्यृचं परमात्मने ।
दत्वा शुभानि पुष्पाणि प्रणम्य च पुनः पुनः ॥ ४०५ ॥

स्नानाद्येत द्विशेषेण देव्योरप्येव माचरेत् ।
अन्येषां परिवाराणां कुर्याद्गन्धादिकं क्रमात् ॥ ४०६ ॥

ततः प्रदक्षिणं कृत्वा प्रणम्याष्टसु दिक्ष्वपि ।
स्तुत्वा जपित्वा स्वं मन्त्रं ध्यात्वा देवं यथोदितम् ॥ ४०७ ॥

भोजनासनोपचारः—

भोजनासन मावेद्य तद्यानाय प्रणम्य च ।
पादुकाग्रये प्रदाया थ भोजनासन मानयेत् ॥ ४०८ ॥

तत्रासीनाय दत्वार्घ्यं पाद्यमाचमनं ततः ।
मधुपर्कं मधुयुतं दधि दद्यात् घृताप्लुतम् ॥ ४०९ ॥

तत आचमनं दत्वा हस्त प्रक्षाळनं तथा ।
सालंकारांच गां दद्यात् गोग्रासार्थं परात्मने ॥ ४१० ॥

आभ्यवहारिकोपचारः—

ततः प्रसन्नः प्रयतः प्रभूतं षड्रसान्वितम् ।
प्रभूत घृत संयुक्तं फलैः स्वादुभिरावृतम् ॥ ४११ ॥

प्रभूताज्याक्त मधुर विविध व्यञ्जना न्वितम् ।
बहूपदंशं बहुभिः चूर्णैरपि सुसंस्कृतम् ॥ ४१२ ॥

मूलमन्त्रा भिमृष्टंच संस्कृतं शोषणादिभिः ।
दिव्यामृत पयस्विन्या सिक्त्वा सुरभि मुद्रया ॥ ४१३ ॥

हविर्निधाय पुरतः देवस्या त्यन्तमुत्सुकः ।
विज्ञापयेच्च सभयः तिष्ठन् मूर्ध्नि कृताञ्जलिः ॥ ४१४ ॥

असत्यम शुचिं नीच मपराधैक भाजनम् ।
अल्पशक्ति मचैतन्य मनर्हं तत्क्रिया स्वपि ॥ ४१५ ॥

मामनादृत्य दुर्बुद्धिं स्वयैव कृपया विभो ।
अति प्रभूत मत्यन्त भक्ति स्नेहोपपादितम् ॥ ४१६ ॥

शुद्धं सर्वगुणोपेतं सर्वदोष विवर्जितम् ।
स्वानुरूपं विशेषेण स्वदेव्या स्सदृशं गुणैः ॥ ४१७ ॥

त्वमेवेदं हविः कृत्वा स्वीकुरुष्व सुरेश्वर ।
इति संप्रार्थ्य तं देव मासीनस्त स्य चा ग्रतः ॥ ४१८ ॥

धान्य मात्रां दर्शयित्वा कारिणे संप्रदाय च ।
परिवेषोपस्तरण क्रियार्थै प्रोक्षणार्घ्यतः ॥ ४१९ ॥

जलं गृहीत्वा देवस्य प्रदद्या द्दक्षिणे करे ।
अथादाय रसं सर्वं हविषः स्वेन पाणिना ॥ ४२० ॥

स्वयं वा भोजये द्देवं प्रयतः परया मुदा ।
दद्या द्वा दक्षिणे हस्ते देवस्य ग्रास मुद्रया ॥ ४२१ ॥

दद्यादपि पृथक् पात्रे दधि सिक्तं हविः पुनः ।
ततो भुक्तवति प्रीत्या तद्धविः पुरुषोत्तमे ॥ ४२२ ॥

देवीभ्यां च हविश्शुद्धं पायसादि यथोदितम् ।
प्रभूतं सुबहु स्वादु घृतं भक्ष्यं निवेदयेत् ॥ ४२३ ॥

भुक्तवत्यो स्तयो श्चापि पत्न्यो र्देवस्य चोभयोः ।
अनुपानं बहुविधं विनिवेद्य यथोचितम् ॥ ४२४ ॥

प्रोक्षणार्घ्यात् गृहीत्वा म्भः सर्वेभ्य स्तु पृथक् पृथक् ।
करेषु तर्पणार्थाय प्रदद्या च्चषकादिना ॥ ४२५ ॥

अथ कोष्णं शुचि जलं दत्वा करविशोधनम् ।
समाषचूर्णं सर्वेभ्यो दत्वा गण्डूष वारि च ॥ ४२६ ॥

मुखप्रक्षाळनं चाम्भः सह कर्पूर चन्दनम् ।
दत्वा चाचमनीयानि जलान्यपि निवेदयेत् ॥ ४२७ ॥

हस्तस्य मार्जनायैव प्लोतान्यपि निवेद्य च ।
पुनश्च चन्दनक्षोदं सकर्पूरं निवेदयेत् ॥ ४२८ ॥

करानना धिवासार्थं ताम्बूलं चापि पूर्ववत् ।
तिलमालां प्रदाया थ कारिणे संप्रदाय च ॥ ४२९ ॥

पुनर्मन्त्रासनम्—

ततो निवेद्य प्रणतः प्रथमासन मादरात् ।
प्रदाय पादुकायुग्मं शनकैः शनकै र्नयेत् ॥ ४३० ॥

देवं देव्यौ च संहृष्टः कृतार्थेना न्तरात्मना ।
तत्रासीनाय देवाय सपत्नीकाय सादरम् ॥ ४३१ ॥

दत्वा पूर्ववदर्घ्याद्य मुपचाराष्टकं क्रमात् ।
दीपाचमन पर्यन्तं परस्मै मन्त्र मूर्तये ॥४३२ ॥

अपूपा न्विविधान् स्वादून् शालि पिष्टो पपादितान् ।
शुभैः स्वादुघृतैः पक्वान् प्रभूत गुड संयुतान् ॥ ४३३ ॥

पृथुकान् गुडसंमिश्रान् सजीरक मरीचकान् ।
कदळी पनसाम्राणां सुपक्वानि फलान्यपि ॥ ४३४ ॥

तत स्सनाळिकेराणि शुचि स्वादु रसानि च ।
दत्वा नुपानानि ततः तर्पणाचमने अपि ॥ ४३५ ॥

सकर्पूरं सताम्बूलं क्रमुकं पुष्प वासितम् ।
नृत्तं गीतञ्च वाद्यञ्च नेत्रश्रुति मनोहरम् ॥ ४३६ ॥

परिवारपूजा—

दर्शयित्वा च देवीभ्या मुपहारादि पूर्ववत् ।
बिनिवेद्य स ताम्बूलं स्तुत्वा स्तोत्रैः प्रणम्य च ॥ ४३७ ॥

गरुत्म च्छेष शेषाश प्रमुखेभ्योपि सादरम् ।
सर्वेभ्यः परिवारेभ्यः कृत्वैत त्सर्व मञ्जसा ॥ ४३८ ॥

स्वगुरूं स्तद्गुरूं श्चापि गन्धाद्यै रभिपूज्य च ।
निवेद्य च यथा पूर्वं शक्तितो हरिपूजनम् ॥ ४३९ ॥

अनुमोदित एवं तैः सस्मितं सदयात्मभिः ।
ततो विशेष पूजायै विष्वक्सेनस्य संयतः ॥ ४४० ॥

अभ्यनुज्ञाप्य देवेशं तेन चाप्यनुमोदितः ।

निवेदितान्न विनियोगः—

ततः प्रति निवेद्याथ नैवेद्य मभिवीक्ष्य च ॥ ४४१ ॥

भगवद्धस्त संस्पर्श लब्ध सौगन्ध्य निर्भरम् ।
भगवद्वीक्षणावाप्त शुध्याधिक्य विभूषितम् ॥ ४४२ ॥

सर्व शुद्धिकरं सर्वभोक्तृ पाप विनाशनम् ।
चतुर्धा संविभज्यैतत् षोढा वा स्वेन पाणिना ॥ ४४३ ॥

विष्वक्सेना र्चनार्थाय न्यस्यैकं भाग मग्रतः ।
प्राङ् निवेदित मेतत्तु नैवेद्य मविशेषितम् ॥ ४४४ ॥

प्रयच्छेत् पात्रभूतेभ्यो वैष्णवेभ्यो विभज्य तत् ।
आत्मार्थे शिरसा स्वेन स्वीकुर्याच्च स्वयं च तत् ॥ ४४५ ॥

अपात्र दान निषेधः—

नैव देय मपात्रेभ्यः कदाचिदिह किञ्चन ।
प्रायश्चित्ती भवेद्दाता अपात्रे प्रतिपादनात् ॥ ४४६ ॥

भगवन्मन्त्र दृक् पूत मपात्रेभ्यो ददाति यः ।
सिद्धोपि याति पातित्यम् आरुरुक्षुस्तु किं पुनः ॥ ४४७ ॥

दाता प्रतिग्रहीता च नरकं व्रजतो ध्रुवम् ।
ततः प्रापण भागेन विभक्तेना त्मना पुरा ॥ ४४८ ॥

भुक्तोज्झितैश्च देवेन गन्धपुष्पाम्बरादिभिः ।
अर्चयेत् सपरीवारं स्वमन्त्रेण चमूपतिम् ॥ ४४९ ॥

तेन भुक्तोज्झितं सर्वम् भक्तस्रक् चन्दनादिकम् ।
देव भुक्तोज्झितं चापि पवित्रं पापनाशनम् ॥ ४५० ॥

न कस्मैचित् प्रयच्छेत्तत् अपात्राय विशेषतः ।
अपात्रे ददतं मूढं तद्भूतानि शपन्ति हि ॥ ४५१ ॥

तत स्तद्भूत तृप्त्यर्थं विशुद्धेम्भसि निक्षिपेत् ।
तद्गणानुचरो भूत्वा भुञ्जीत स्वय मप्यदः ॥ ४५२ ॥

तदा श्रितानां भूतानां पाताळ तळ वासिनाम् ।
स्वेन भुक्तोज्झितं सर्वं दत्तं तेन महात्मना ॥ ४५३ ॥

एव मभ्यर्च्य सेनान्यं सपत्नीकं समन्त्रिणम् ।

पूजा समाप्तिः—

देव पार्श्वमुपागम्य प्रणम्य च पुनः पुनः ॥ ४५४ ॥

प्राप्त मन्त्र श्चतुर्थांशं स्वाध्यायार्थ मुदीरितम् ।
विज्ञाप्य विष्णवे तस्मै लब्धानुज्ञस्ततो पि च ॥ ४५५ ॥

बाह्यार्था दखिला च्चेतः समाहृत्ये न्द्रियै स्सह ।

अष्टाक्षर जपः—

जप न्नष्टाक्षरं मन्त्रं प्राणायाम पुरस्सरम् ॥ ४५६ ॥

प्रयतः परया भक्त्या पूर्वमेव समाहितः ।
कराङ्गुळि शरीरेषु न्यासान् कृत्वा यथोदितान् ॥ ४५७ ॥

गुरून् मन्त्र मृषिं छन्दो देवताश्च यथाक्रमम् ।
शक्तिं बीजं च शिरसा प्रणमे देव मादृतः ॥ ४५८ ॥

इदं गुरुभ्यः पूर्वेभ्यः क्रियते शिरसा नमः ।
मन्त्र ज्ञान प्रदातृभ्यः तद्गुरुभ्योपि सांप्रतम् ॥ ४५९ ॥

नमस्ते मन्त्रराजाय नमस्ते ष्टाक्षरात्मने ।
नमस्ते चेतनाधार परब्रह्मा भिधायिने ॥ ४६० ॥

स्थित्वा न्तर्हृदये सर्वा नात्मनः संनियंच्छते ।
ऋषये ष्टाक्षरस्यान्त र्यामिणे हरये नमः ॥ ४६१ ॥

(ऋषये ष्टाक्षरस्या स्य बदर्याश्रम वासिने इति पाठान्तरम्)

अष्टाक्षर महामन्त्रवर्ण सङ्ख्या भिधायिनीम् ।
छन्दश्च देवीं गायत्रीं शिरसा प्रणमाम्यहम् ॥ ४६२ ॥

मन्त्र शक्तिः स्थिता यस्मिन् आश्रितेष्टार्थ दायिनी ।
पदं नारायणायेति शक्तिं तां प्रणमाम्यहम् ॥ ४६४ ॥

अकारादुत्थितं बीजं वासुदेवा भिधायिनम् ।
तद्बीज मस्य प्रभवं प्रणवं प्रणतोस्म्यहम् ॥ ४६४ ॥

मन्त्रस्य देवतां चापि परमात्मान मव्ययम् ।
नारायणं परं ब्रह्म नतोस्मि शिरसा हरिम् ॥ ४६५ ॥

प्रणम्य चैव गुर्वादीन् गन्धाद्यै रभिपूज्य च ।
अनिशं भगवद्बिम्ब मापीठा दवलोकयन् ॥ ४६६ ॥

जपे दष्टाक्षरं मन्त्रं तदर्थ मनुचिन्तयन् ।
अष्टोत्तर सहस्रं वा शतंवा दश वो त्सुकः ॥ ४६७ ॥

जपान्त कृत्यम्—

जपान्ते मनसा ध्यात्वा यथोक्ताकृति मच्युतम् ।
सपत्नीकं सानुयात्रं सद्वारप गणेश्वरम् ॥ ४६८ ॥

कृत्वैवं मनसा योगं सुचिरं हृष्टमानसः ।
उत्थाय च ततो योगात् दण्डवत् प्रणिपत्य च ॥ ४६९ ॥

स्तुत्वा च बहुभिः स्तोत्रैः कृत्वा चापि प्रदक्षिणम् ।
स्थित्वा ग्रे देवदेवस्य कृत्वां मूर्ध्नि स्वमञ्जलिम् ॥ ४७० ॥

जितन्त इति मन्त्रेण तं देवं शरणं व्रजेत् ।
ततः स्वस्मै प्रपन्नाय दत्ते तेनाभये सति ॥ ३७१ ॥

निर्भय स्सर्वभूतेभ्यः भवे न्निर्वृत मानसः ।
कर्मण्यवसिते तस्मिन् दुर्लभे दुष्करेपि च ॥ ४७२ ॥

अर्घ्यं दत्वा यथापूर्वं स्वमात्मानं निवेद्य च।
स्वनिवेदित मन्त्रेण दास शिष्या त्मजन्मनः ॥ ४७३ ॥

सादरः स्वेन शिरसा भक्ति निघ्न परमात्मने।
निदध्यात् स्वं च कर्तृत्वं तस्मिन्नेव परात्मनि ॥ ४७४ ॥

अपराधक्षमा प्रार्थना—

क्षामये चापराधान् स्वान् ज्ञाना ज्ञानोप पादितान्।
असङ्ख्या नविषह्यांश्च क्रियमाणा नह र्निशम् ॥ ४७५ ॥

अज्ञानतो प्यशक्त्या वा आलस्या दुष्ट भावतः।
कृतापराधं कृपया क्षन्तुमर्हसि मां विभो ॥ ४७६ ॥

आज्ञना दथवा ज्ञाना दशुभं यत् कृतं मया।
क्षन्तव्यं तदशेषेण दास्येन च गृहाण माम् ॥ ४७७ ॥

उपचारापदेशेन कृतानहरह र्मया।
अपचारा निमान् सर्वान् क्षमस्व पुरुषोत्तम ॥ ४७८ ॥

शिरसा प्रार्थिते नैवं प्रसन्नेन परात्मना।
क्षान्त सर्वापचारेण करुणा मृत वर्षिणा ॥ ४७९ ॥

वात्सल्यौ दार्य सौशील्या द्यनन्त गुणशालिना।
अशरण्य शरण्येन कृपया परया स्वया ॥ ४८० ॥

सुस्मिता लोक मधुर माहूया द्भुतया गिरा ।
दत्तं तत्पदयोर्युग्मं स्वयमेव स्वमूर्धनि ॥ ४८१ ॥

वहं स्तच्चरणस्पर्शा निहता शेषकल्मषः ।
आसित्वा सुचिरं तस्य पुरतः परया मुदा ॥ ४८२ ॥

समुत्थाय तत स्तस्मै भूयो भूयः प्रणम्य च ।

पर्यङ्कासनोपचारः—

स्मारयित्वा स्वकं धाम तद्यानाय प्रणम्य च ॥ ४८३ ॥

दत्वा थ पादुका युग्मं तत्र देवं समानयेत् ।
सपत्नीकं सानुयात्रं सद्वारप गणेश्वरम् ॥ ४८४ ॥

ततस्तदर्हविन्यासं सोपधानं स्वलंकृतम् ।
अनन्त भोग शयन मधिरूढे परात्मनि ॥ ४८५ ॥

आसीनयो स्तदा देव्योः देवपार्श्वे यथातथम् ।
आसीनेषु यथाभागं सेनान्यादिषु सर्वतः ॥ ४८६ ॥

अथार्घ्य पाद्याचमन ताम्बूलादि यथोचितम् ।
देवाय देवी युक्ताय सानुगाय निवेद्य च ॥ ४८७ ॥

प्रणम्य दण्डवद् भूमौ भूयो भयः पुरो हरेः ।
अनुयागादिकं चाथ चिकीर्षे श्चाह्निकं विधिम् ॥ ४८८ ॥

दत्तानुज्ञः परेणापि गमनायात्मनो बहिः ।

परिवार प्रार्थना—

निर्गन्तु कामो निक्षिप्य देवं दौवारिकादिषु ॥ ४८९ ॥

सभयस्सानुतापश्च चण्डादीन् द्वारपालकान् ।
कुमुदादीन् गणेशांश्च चक्रादी न्यायुधान्यपि ॥ ४९० ॥

गरुडं च विशेषेण शेषं शेषाशनं तथा ।
प्रणम्य धारयेद्देवं सस्नेहादर साध्वसम् ॥ ४९१ ॥

निक्षिपन् जीवितमिव न्यस्यन्निव महानिधिम् ।
निधित्सन्निव चक्षुः स्वम् अर्पयेन्निव कल्पकम् ॥ ४९२ ॥

सर्वे भवन्तः सगणाः सन्नद्धाः सर्वदिक्ष्वपि ।
सावधानाश्च तिष्ठन्तु निक्षिपामि भवत्स्वहम् ॥ ४९३ ॥

मम नाथं मम गुरुं पितरं मातरं च मे ।
हरिं श्रियं भुवं चापि तान् पालयत सर्वतः ॥ ४९४ ॥

यथा निक्षिप्त रूपं मे सन्दर्शयत सर्वदा ।
भवतश्शरणं लब्ध्वा व्रजामि गत साध्वसः ॥४९५ ॥

अन्ते भगवत्प्रार्थना—

इति विज्ञाप्य तान् पश्चात् प्रार्थयेत हरिं गिरा ।
ननु देव त्वमेवैकः सस्थावरचरं जगत् ॥ ४९६ ॥

ब्रह्मादि स्थावरान्तञ्च परिपासि बिभर्षि च ।
संहरिष्यासि चाप्यन्ते रूपैः स्वैस्वै र्यथेप्सितैः ॥ ४९७ ॥

केन त्वं पाल्यसे देव केन वा त्वं विहिंस्यसे ।
अतस्त्वमेव त्वां देव्यौ चण्डादीन् पालकानपि ॥ ४९८ ॥

मांच मामकमप्येतत् सर्वं गृह मशेषतः ।
पालयित्वा स्वसङ्कल्प मात्रेण मधुसूदन ॥ ४९९ ॥

त्वां मया त्वयि निक्षिप्तं विश्वस्ते नार्थि कल्पक ।
आगताय यथाकालं सर्वं मे दातुमर्हसि ॥ ५०० ॥

इति विज्ञाप्य पुरतः दण्डव त्प्रणिपत्य च ।

पूजानन्तर कर्तव्यानि—

होमं पितृक्रियां पश्चात् अनुयागादिकं च यत् ॥ ५०१ ॥

सर्वमावेद्य तेनैव नियुक्तस्तच्चिकीर्षया ।
वीक्षमाणस्तमेवैनं चक्षुषा स्तब्धपक्ष्मणा ॥ ५०२ ॥

मूर्ध्नि न्यस्ताञ्जलि पुटः विनिष्क्रम्य शनैः शनैः ।
बध्वा कवाट युगलं रक्षां कृत्वा प्रणम्य च ॥ ५०३ ॥

होमाद्य मनुयागान्तं वैधं कर्म समाचरेत् ।

पाञ्चकालिक धर्ममाहात्म्यम्—

एवं मेकदिनं वाथ द्विदिनं त्रिदिनं तु वा ॥ ५०४ ॥

मासं संवत्सरं वापि यावज्जीवित मेव वा ।
वर्तेत भक्त्या परया वैष्णव स्सुचिरं सुखम् ॥ ५०५ ॥

प्रारब्धे मध्यतो विघ्नैः विच्छिन्नेप्यत्र कर्मणि ।
नानर्थो नच नैष्फल्यं न कृतांशस्य संक्षयः ॥ ५०६ ॥

प्रारब्धेष्वसमाप्तेषु विच्छिन्नेष्व न्यकर्मसु ।
भवत्येवैत दखिलं वैदिके ष्वितरेष्वपि ॥ ५०७ ॥

कृतः स्वल्पांशको प्यस्य स्थित्वा सुचिरमक्षयः ।
त्रायते च स्वकर्तारं स्वशक्त्या भवभीतितः ॥ ५०८ ॥

श्रद्धावा नधिकार्यस्मिन् युक्ते कर्मणि वैष्णवे ।

अधिकार निर्णयः—

नापरः कुलवृत्तादि गुणः कर्तुर्विशेषतः ॥ ५०९ ॥

येन केनापि देषिता भाव्यमस्मिं स्तु कर्मणि ।
तस्मिन् सुदुर्लभे लब्धे कृपै वानन्तरक्रिया ॥ ५१० ॥

ज्ञान कर्म तपो योग युक्तान प्यधिकारिणः ।
श्रद्धा हानिः परो दोषः च्यावये दधिकारतः ॥ ५११ ॥

स्वोक्तासू पनि षत्स्वेवं उक्तवानुत्तमः पुमान् ।
श्रद्धा श्रद्धे समुद्दिश्य तस्मात् श्रद्धा परो गुणः ॥ ५१२ ॥

नेह काल क्रिया कर्तृ द्रव्यदेशादि संश्रिता ।
एषितारं तदिच्छां वा विहायास्ति नियन्त्रणा ॥ ५१३ ॥

निषेधाविषयीभावात् ऋते नैवा परो गुणः ।
प्रीति हेतुः परेशस्य स्वार्चनाङ्गेषु वस्तुषु ॥ ५१४ ॥

अत एवार्चनाङ्गानि द्रव्याणि गणयन् स्वयम् ।
प्राह पत्रादिमात्राणि जातिवर्णादिभि र्विना ॥ ५१५ ॥

अहो हरिं ब्रुवन्नेवं मुक्तिमेप्यत्यहो अहो ।
अहो अहो सुलभता कृपा चैवमहो अहो ॥ ५१६ ॥

अस्त्येव निर्मलं तोय मयत्न सुलभं भुवि ।
दृश्यते च शुभा दूर्वा सुलभा सर्वदिक्ष्वपि ॥ ५१७ ॥

अस्ति जिह्वा हरिं स्तोतु मात्मीयैवास्य मध्यगा ।
स्वकरावपि कर्मण्यौ ध्यातुमस्त्येव मानसम् ॥ ५१८ ॥

अतो न हानि र्मन्त्राणां यागविघ्नकरी हरेः ।
सामग्र्येषा हि संपूर्णा वक्त्रा ह्येकैकमेव तु ॥ ५१९ ॥

अज्ञाना दथवा ज्ञानात् अपराधेषु सत्स्वपि ।
प्रायश्चित्तं क्षमस्वेति प्रार्थनैकैव कैवलम् ॥ ५२० ॥

सत्य सङ्कल्प संयुक्ते सर्वज्ञे सर्वशक्तिके ।
नित्य निर्दोष निस्सीम महाविभव योगिनि ॥ ५२१ ॥

स्वाधीन त्रिविधा शेष चिदचिद्वस्तु शेषिणि ।
निर्मलानन्त विज्ञान निधा बुद्धि शायिनि ॥ ५२२ ॥

स्वसङ्कल्प कृताशेष जगत् सृष्टि लय स्थितौ ।
अर्चनादिष्व नर्हत्वात् नकश्चि न्नापराध्यति ॥ ५२३ ॥

अतो नङ्गीकृताशेष कर्तृदोष विमर्शया ।
कृपयैवास्य देवस्य सर्वोप्य र्हति सत्क्रियाम् ॥ ५२४ ॥

ग्रन्थ समाप्तिः—

इत्यानुपूर्वी रचिता परस्य ब्रह्मणो हरेः ।
आरा धनविधेस्सम्यक् वैष्णवानां मनःप्रिया ॥ ५२५ ॥

पठतां शृण्वतां चैनां विभूतिं श्रद्धया त्मना ।
श्रोतुमिच्छावतां चापि श्रुत्वा चाप्यनसूयताम् ।। ५२६ ।।

भगवच्चरणाम्भोज परिचर्यैक विग्रहाम् ।
वर्धतां वैष्णवी लक्ष्मीः अक्षया भक्तिवृद्धिदा ।। ५२७ ।।

अष्टोत्तरै रनुपमैः श्लोकानां पञ्चभिः शतैः ।
उपचारानुपूर्वीयं रचिता परमात्मनः ।। ५२८ ।।

इति श्री वङ्गिवंशेश्वर विरचिताः कारिकाः

।। समाप्ताः ।।

---

